# श्रेयःप्राप्त्यै सरलोपायः

श्रुतिर्विभिन्ना स्मृतयश्च भिन्नाः
नैको ऋषिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ।।

लोके व्यवहारार्थं श्रुतिः प्रमाणभूता। किन्तु श्रुतिवाक्येषु एव न ऐकमत्यम्। एकं वाक्यम् एकं तत्त्वं वदति चेत् अपरं वाक्यम् अन्यदेव वदति! सामान्याः जनाः अनयोः सामञ्जस्यं कथं वा जानीयुः?

श्रुतेः अर्थं प्रतिपादयन्त्यः स्मृतयः अपि वस्तुतः प्रमाणभूताः एव। किन्तु अत्रापि सा एव कथा। विभिन्नाः स्मृतयः। एकैकस्य स्मृतिकारस्य एकैकः अभिप्रायः। अतः अत्रापि सामान्याः सम्भ्रान्ताः भवन्ति।

धर्मानुगुणं व्यवहारः भवेत् इति तु स्वतःसिद्धम्। किन्तु सूक्ष्मं धर्मतत्त्वं ज्ञातुं कः मार्गः? श्रुतिस्मृत्यादयः अत्र न उपकुर्वन्ति। एवं तर्हि सामान्याः किं वा कुर्युः? ये श्रुतिं न श्रुतवन्तः स्मृतिं न पठितवन्तः, तेषां का वा गतिः?

कविः वदति – 'श्रुतिस्मृत्यादीनां विचारं त्यजतु। महात्मनां मार्गम् अनुसरतु। तावता पर्याप्तम्' इति। महात्मानः विवेकशीलाः। ते युक्तायुक्ततां, साधकबाधकतां च सम्यक् विचार्य अग्रे गच्छन्ति। अतः तैः अनुसृतं मार्गं निश्चयेन अनुसर्तुं शक्नुमः वयम्।

एषः एव श्रेयःप्राप्त्यैः सुलभः सरलः च उपायः।

जिज्ञासा –

# क्त्वाप्रत्ययप्रयोगे भिन्नकर्तृकत्वम्

शिष्यः- आचार्य! ह्यः मम स्नेहितस्य सुरेशस्य पत्रम् आगतम्। भवते नमस्कारान् निवेदितवान् सः।

आचार्यः- सन्तोषः। उत्तरलेखनसमये मम आशीर्वादान् सूचयतु।

शि - तस्य पत्रे आरम्भे एव एकं वाक्यम् आसीत्....।

आ - किमिति?

शि - 'भवतः पत्रं दृष्ट्वा महान् सन्तोषः अभवत्' इति।

आ - सामान्यवाक्यम् एतत्। सर्वेषु पत्रेषु भवति एव प्रायः।

शि - एतत् वाक्यं साधु वा?

आ - कया दृष्ट्या? व्याकरणदृष्ट्या उत व्यवहारदृष्ट्या?

शि - व्याकरण-अविरुद्धा किल व्यवहारदृष्टिः? एवं तर्हि तयोः कः भेदः?

आ - व्याकरण-अविरोधं भिन्नैः भिन्नैः मार्गैः साधयितुं शक्यते बहुत्र। यदि प्रामाणिकः शिष्ट-प्रयोगः कुत्रापि दृष्टः चेत् तस्य व्याकरणानुग्रहः सम्पाद्यते आस्माभिः। एवं च व्याकरणदृष्ट्याः व्यवहारदृष्ट्याः च सूक्ष्मः भेदः अस्ति एव।

शि - अस्माकं तु व्याकरणाविरुद्धः व्यवहारः प्रमाणम्। एवं तर्हि व्यावहारिकदृष्ट्या साधुत्वं वदतु।

आ - अत्रैव पश्यतु। वस्तुतः व्याकरणस्य सामान्यनियमानुसारं एतत् वाक्यं दुष्टम्। किन्तु व्यवहारदृष्ट्या साधुत्वं सम्पाद्यते।

शि - व्याकरणदृष्ट्या असाधुत्वं कथम् इति.....।

आ - यत्र 'क्त्वा' (त्वा) प्रयुज्यते तत्र क्रियाद्वयं भवति। तदुभयम् अपि एकः एव कर्ता करोति*। यथा - रामः भोजनं कृत्वा शालां गच्छति - इत्यत्र भोजनकर्ता शालागन्ता च रामः एव। यदि रामः भोजनकर्ता, भीमः शालागन्ता चेत् तत्र क्त्वा (त्वा) न भवति।

---

* समानकर्तृकयोः पूर्वकाले-पाणिनिसूत्रम्।

शि - पूर्वतनवाक्ये तु दर्शनं तु स्नेहितः कृतवान्। भवनं (Happening) तु सन्तोषस्य। एवं भिन्नकर्तृकत्वात् अत्र क्त्वाप्रत्ययस्य प्रयोगः न उचितः। एवं किल?

आ - विषयः सम्यक् अवगतः भवता। किन्तु पूर्वं प्रामाणिकैः कविभिः एवं भिन्नकर्तृकस्थले अपि क्त्वाप्रयोगः कृतः। यथा-

(१) भक्ष्याशया हि मञ्जूषां दष्ट्वाखुः तेन भक्षितः

— जयदेवः, अप्पय्यदीक्षितः च

(२) मत्प्रसूतिमनाराध्य.... सन्ततिः न भविष्यति।

— कालिदासः रघवंशे

व्याख्यानकारैः एतस्य प्रामाणिकत्वं साधितम्।

शि - तत् कथम्?

आ - अत्र, 'स्थितः' 'स्थितस्य' इत्यादीनाम् अध्याहारः करणीयः। तदा च 'दष्ट्वा स्थितः आखुः भक्षितः' 'अनाराध्य स्थितस्य ते सन्ततिः न भविष्यति' इत्यादिरीत्या वाक्यानि सिध्यन्ति। दंशनस्य स्थितेः च समानकर्तृकत्वं, आराधनस्य स्थितेः च समानकर्तृकत्वम् इति दोषः अपास्तः।

शि - एवं तर्हि पूर्वोक्ते वाक्ये 'स्थितस्य' इति अध्याहारः करणीयः। भवतः पत्रं दृष्ट्वा (स्थितस्य) मम सन्तोषः अभवत् इति वाक्यस्वरूपम्। तथा च न दोषाय।

आ - आम्, क्त्वाप्रत्यये प्रयुक्ते भिन्नकर्तृकत्वं यत्र दृश्यते तत्र एवं समाधानं वक्तव्यं भवति।

शि - 'आगत्य कति मासाः अतीताः' इत्यादिवाक्येषु अपि एवम् एव किल?

आ - अथ किम्?

शि - मादृशानां सामान्यानां प्रयोगस्य प्रामाण्यम्....।

आ - किमर्थं चिन्ता भोः? प्राचीनैः एतादृशे स्थले प्रामाण्यं सम्पादितम्। वयं तु, अगतिकगत्या 'पत्रं दृष्ट्वा...' 'आगत्य कति....' इत्यादिषु क्त्वाप्रयोगं कुर्मः। अतः व्यवहारे एतादृशानि वाक्यानि निश्चयेन प्रयोक्तुं शक्यन्ते।



# चन्दमामा

जून्-१९८६



अन्तरङ्गम्






प्रतिकृतिमूल्यम् रू. २.५०

वार्षिकं ग्राहकशुल्कं रू. ३०.००

# चन्दमामा

संस्थापकः **'चक्रपाणिः'** सञ्चालकः **'नागिरेड्डी'**

प्रतिवर्षं सहस्रशः बालाः तरुणाः च संस्कृतं पठन्ति। पदवीस्तरे, मेट्रिक्युलेषन् स्तरे, साम्प्रदायिकपाठशालासु – इत्येवं संस्कृतं बहवः पठन्ति एव। किन्तु पठनानन्तरम् एते संस्कृतेन सम्बद्धाः न भवन्ति। किमर्थम्?

जीवननिर्वहणार्थम् उद्योगान्तरम् आश्रितं चेत् संस्कृतसम्बन्धः विघटितः भवेत् इति नियमः तु नास्ति किल? वस्तुतः विचार्यमाणे एतेषां रक्षणार्थम् अस्माभिः कः उपायः आश्रितः? काव्यादयः सामान्यं न रञ्जयन्ति। शास्त्राणि तु दुरवगाह्यानि एव। पत्रिकाः अपि इतरभाषासु इव न आकर्षिकाः। इदानीं जनानां विशेषरुचिः Light-Reading विषये। किन्तु एतदनुकूलं साहित्यम् अस्माकं किम् अस्ति?

एतद्दृष्ट्या संस्कृतज्ञैः सगम्भीरं चिन्तनीयम्। सामान्य-स्तरानुगुणं लघुकृतयः सरसकथाः च रचनीयाः। तदा एव संस्कृतक्षेत्र प्रविष्टाः रक्षिताः भवन्ति। संस्कृतज्ञानां परिवारः शीघ्रं वर्धते।

सम्पुटः-३ जून्-८६ सञ्चिका-३

प्रतिकृतिमूल्यं- रू. २.५० वार्षिकं ग्राहकशुल्कं- रू. ३०/-






रसप्रश्नाः –

# युक्तः सम्बन्धिशब्दः कः?

(अधः अष्ट प्रश्नाः सन्ति। एकैकत्र अपि एकैकः शब्दः पूरणीयः। प्रथमपङ्क्तेः साम्येन द्वितीयपङ्क्तौ एकं शब्दं पूरयन्तु।)

यथा – रामः - दशरथः। कृष्णः - वसुदेवः।
(रामस्य पिता दशरथः, तथैव कृष्णस्य पिता वसुदेवः)

१. चन्दमामा - मासपत्रिका।
संस्कृतभवितव्यम् ----------।

२. 'श्रु' धातोः वर्तमानकालरूपं - शृणोति।
,, ,, भविष्यत्कालरूपं ----------।

३. गङ्गालहरी - स्तोत्रकाव्यं - जगन्नाथः।
मेघदूतम् ---------- -------।

४. गच्छति - वर्तमानकालिकं क्रियापदम्।
गतवान् -----------।

५. व्याकरणे सूत्राणि - पाणिनिः।
व्याकरणे वार्तिकानि -----------।

६. भट्टिकाव्यम् - रावणवधः।
अमरकोषः ----------।

७. सत्त्वः, रजः, तमः - गुणत्रयम्।
ब्रह्मसूत्राणि, भगवद्गीता, उपनिषदः ---------।

८. प्रसिद्धाः उपनिषदः - दश।
प्रसिद्धानि पुराणानि -----------।

(उत्तराणिः– १. साप्ताहिकपत्रिका। २. श्रोष्यति। ३. खण्डकाव्यं-कालिदासः। ४. भूतकालिकं क्तवतुप्रत्ययान्तं रूपम्। ५. वररुचिः। ६. नामलिङ्गानुशासनम्। ७. प्रस्थानत्रयम्। ८. अष्टादश।)

# रसवार्ता:



## समुद्रे विचित्रं दृश्यम्

केप्टन् चार्लेस् मेक्देर, जपान् एर् लैन्स् संस्थायाः उद्योगी। सः वदति यत् टोकियोतः २५ मैल् दूरे ईशान्यदिशि समुद्रे अकस्मात् ६००० फूट् उन्नतं २०० मैल् विस्तीर्णं मेघाकारकं धूमस्तोमम् उद्गच्छन्तं, क्रमशः अपगच्छन्तं च दृष्टवान् इति। समुद्रगर्भे अग्निपर्वतस्य स्फोटनेन तादृशं दृश्यम् उत्पन्नं स्यात् इति शास्त्रज्ञाः वदन्ति।

## उन्मत्ताः पक्षिणः



सामान्यतः ४०० राबिन् पक्षिणः आकाशे गच्छन्तः क्यालिफोर्निया राजमार्गे पतन्तः च कारयानानाम् यातायातेन प्राणान् त्यक्तवन्तः। एतैः पक्षिभिः यानि फलानि खादितानि तानि पर्युषितानि आसन्। तत्कारणतः तेषु उन्मादः उत्पन्नः। ततश्च ते उड्डयनसमये मार्गभ्रष्टाः सन्तः राजमार्गे पतितवन्तः।

## व्योमनौकापातः



१९०८ तमे संवत्सरे जून् मासे आकाशतः प्रकाशमानं किमपि विशालं वस्तु पतितं, येन च सेण्ट्रल्सैबीरियाप्रदेशस्य १५०० चतुरस्रमैल् विस्तीर्णा भूमिः कम्पिता अभवत्। एतद्विषये सविस्तरं संशोधनं कृत्वा सोवियत्देशीयः एन्. वास्सिलीव् उक्तवान् यत् तत् ११ बिलियन् वर्षेभ्यः प्राचीनः व्योमनौकाभागः, अतिदूरस्थितात् नक्षत्रतः प्रेषितः च स्यात् इति।

# भवन्तः जानन्ति वा?

१. प्रपञ्चे अतिभारभूता घण्टा कस्मिन् नगरे अस्ति?
२. प्रपञ्चे सर्वप्रथमं निर्मितम् अत्युन्नतं भवनं किम्?
३. प्रपञ्चे महार्घचित्रपटत्वेन प्रसिद्धः चित्रपटः कः?
४. स च देशः कः,यस्य च अतिपुरातनं राष्ट्रियं गीतम् अस्ति?
५. कस्मिन् देशे अत्यधिकसङ्ख्यया आंग्लपत्रिकाः प्रकाश्यमानाः सन्ति?

(उत्तराणि ६५ तमे पृष्ठे)

पुराणगाथावली–

# अरिष्टनेमिः

पूर्वं कश्चित् राजा मृगयार्थम् अरण्यं गतवान्। बहुकालम् अटनानन्तरम् अपि एकः अपि प्राणी तस्य दृष्टिगोचरः न जातः। अन्ते एकः हरिणः महाराजेन दृष्टः। राजा तस्य उपरि बाणं प्रयुक्तवान्। तदा 'हन्त!' इति मानवकण्ठध्वनिः श्रुतः। महाराजः आश्चर्येण ध्वनिम् अनुसृत्य धावितवान्। तत्र हरिणचर्मणा आवृतं कञ्चन मुनिकुमारं बाणाघातेन मरणावस्थाम् आपन्नं दृष्टवान् सः।

अपराधेन भीतः महाराजः 'पलायनम् एव उचितम्' इति एकवारं चिन्तितवान्। किन्तु अनन्तरक्षणे विचारं परिवृत्य 'एतस्य मातापितरौ क्षमां प्रार्थनीयौ' इति निश्चित्य ततः प्रस्थितवान्। समीपे एव नद्याः तीरे कश्चन कुटीरः आसीत्। कुटीरात् बहिः आगच्छन्तम् अरिष्टनेमिनामकं मुनिं नमस्कृत्य राजा पृष्टवान् - "श्रीमन्! हरिणचर्मणा आवृतः मुनिकुमारः कोऽपि पर्वतसमीपं गतवान् आसीत् वा?" इति।

"आं, सः मम पुत्रः एव। दर्भान् आनेतुं गतवान् सः" इति उक्तवान् अरिष्टनेमिः। तदा एव दर्भान् गृहीत्वा मुनिकुमारः तत्र आगतवान्।

एतत् दृष्ट्वा राजा आश्चर्येण मूकः अभवत्। क्षणकालानन्तरं सः उक्तवान् - "मृगं मन्यमानः अहं भवतः पुत्रं बाणेन मारितवान्। मृतम् एतम् अहं स्वनेत्राभ्यां दृष्ट्वा आगतवान् अस्मि। सः एव कथं वा अत्र सजीवम् आगतवान्?" इति।

"राजन्! मम पुत्रं भवान् बाणेन मारितवान् इति तु सत्यम् एव। किन्तु अस्मदीयाः प्राणाः भगवते अर्पिताः। अतः एतादृशैः मारणैः अस्माकं काऽपि हानिः नास्ति" इति मन्दहासं प्रकटयन् उक्तवान् अरिष्टनेमिः।





# योग्यतापरीक्षा

रमापतिनामकस्य गृहस्थस्य सुवर्चला नाम एका पुत्री। एषा बाल्ये एव मातृविहीना अभतत्। मातृविहीनाम् एताम् अद्वितीयां पुत्रीं अत्यन्तप्रीत्या पालितवान् रमापतिः। इदानीं सवर्चला प्राप्तवयस्का। एतस्याः विवाहार्थं रमापतिः वरान्वेषणम् आरब्धवान्।

एवं स्थिते एकदा पाश्र्वग्रामे स्थितः रमापतेः स्नेहितः वार्तां प्रेषितवान् - "भवता सह विशेषतया वार्तालापः करणीयः अस्ति। अनारोग्यकारणतः अहं तत्र आगन्तुं न शक्नोमि। अतः त्वरया भवान् एव आगच्छतु" इति। 'प्रातः प्रस्थाय रात्रौ प्रत्यागन्तुं शक्येत' इति चिन्तयित्वा रमापतिः गन्तुम् उद्युक्तः। तद्दिने आकाशः मेघैः व्याप्तः आसीत्। अतः रमापतिः पुत्रीम् उक्तवान् - "अद्य वृष्टिः आगच्छेत् एव। मम आगमने विलम्बः अपि भवेत्। भवती द्वाराणि पिधाय तिष्ठतु" इति।

"भवान् मम विषये चिन्तां न करोतु। कार्यं समाप्य श्वः प्रातः अपि आगन्तुम् अर्हति भवान्। अहम् इतोऽपि बालिका न। भवान् निश्चिन्ततया गत्वा आगच्छतु" इति उक्त्वा पितरं प्रेषितवती सुवर्चला।

अन्धकारः व्याप्तः। रमापतिः न आगतवान्। सुवर्चला यद्यपि द्वाराणि विधाय सुप्तवती, किन्तु निद्रां न प्राप्तवती। सामान्यतः मध्यरात्रे केनचित् क्रियमाणः द्वारशब्दः तया श्रुतः। 'पिता एव आगतवान् स्यात्' इति चिन्तयन्ती सुवर्चला द्वारपार्श्वे स्थितं वातायनम् उद्घाट्य बहिः दृष्टवती। बहिः मन्दं वर्षति स्म। वृष्ट्या आर्द्रः कश्चित् वृद्धः द्वारसमीपे स्थितः आसीत्।

वातायनद्वारेण पश्यन्तीं सुवर्चलां सः वृद्धः दीनतया प्रार्थितवान् - "भोः! अस्यां रात्रौ शयनार्थं किञ्चित् अवकाशं दत्त्वा उपकरोतु भवती। अज्ञातं ग्रामम् आगतवान् अस्मि।

"सुभद्रा"



अग्रे गन्तुं न शक्नोमि। अस्वस्थः अपि अस्मि अहम्" इति।

सुवर्चला करुणया द्वारम् उद्घटितवती। "अन्तः आगच्छतु तात!" इति वदन्ती दीपम् उद्दीपितवती च।

वृद्धः अन्तः आगतवान्। सुवर्चला तस्मै धारणार्थं वस्त्राणि दत्तवती। शरीरमार्जनार्थं प्रोञ्छम् अपि दत्तवती। सः वृद्धः शरीरं मार्जयित्वा नूतनवस्त्राणि धृत्वा परितः पश्यन् पृष्टवान् "भवती अस्यां रात्रौ गृहे एकाकिनी तिष्ठति वा?" इति।

सुवर्चला पितुः प्रवासवार्तां निवेद्य पृष्टवती - "तात! दाक्षिण्यं मास्तु।भवतः भोजनं समाप्तं वा?" इति।

सः वृद्धः मन्दस्वरेण उक्तवान् - "वस्तुतः वक्तव्यं चेत् अद्य मध्याह्ने अपि भोजनं न कृतम्। तथापि चिन्ता नास्ति। एवम् एव निद्रां करोमि" इति।

"भोजनं विना निद्रा वा? आगच्छतु। पितुः निमित्तं सज्जीकृतः पाकः अस्ति एव" इति वदन्ती सा तं पाकशालां नीतवती। पाकम् उष्णीकृत्य प्रीत्या परिवेषितवती। वृद्धः तृप्त्या भोजनं कृतवान्।

सुवर्चला प्रकोष्ठे वृद्धनिमित्तं कटं प्रसार्य शय्यां सज्जीकुर्वती आसीत्। अकस्मात् शिरसि लघुताडनं तया अनुभूतम् इव। झटिति सा शिरः उन्नीय दृष्टवती। तदा वृद्धः तीक्ष्णां छुरिकां प्रदर्शयन् कोपेन गर्जितवान् - "भोः! गृहे स्थितानि आभरणधनादीनि बद्ध्वा अत्र आनयतु। अन्यथा किमपि आचरति चेत् भवतीं निर्दयं यमसदनं प्रेषयिष्यामि" इति।

अकस्मात् प्रवृत्तया एतया घटनया स्तब्धा सुवर्चला पदद्वयं पृष्ठतः गतवती। अनन्तरं धैर्यम् आश्रित्य - "आश्रयदात्र्याः विषये एव द्रोहम् आचरति किल? चोरः चेदपि कृतघ्नः न भवति इति मया श्रुतम् आसीत्। भवते भोजनं दत्त्वा मया अपचारः कृतः" इति उक्तवती।

वृद्धः असहनां प्रदर्शयन् - "किमिति महोपकारं कृतवती भवती? यदि द्वारम् उद्घाटितं न स्यात् तर्हि भित्त्वा प्रविशेयम्

एव। भोजनं न परिविष्टं चेत् स्वयं स्वीकुर्याम्। सर्वम् उदर-निमित्तम्। वृथा वादः किमर्थम्? मया यथा उक्तं तथा आचरतु। आभरणादीनि आनयतु अत्र'' इति पुनः उक्तवान्।

''भोजनं परिवेषयन्त्या मया एव अपराध कृतः। अहं भवते स्वहस्तेन किमपि न ददामि। मां मारयति चेदपि चिन्ता नास्ति। भवान् धनम् इच्छति चेत् तत्र प्रकोष्ठे पेटिकायां सर्वम् अस्ति। भवान् एव नयतु'' इति उक्तवती सा कोपेन।



वृद्धः उत्साहेन प्रकोष्ठं प्रविष्टवान्। सुवर्चला विद्युद्वेगेन गत्वा द्वारं पिधाय द्वारशृङ्खलया कीलितवती। वृद्धः त्वरया प्रत्यागत्य द्वारम् आकृष्टवान्। हताशया निरन्तरं द्वारं ताडितवान्।

'वृद्धस्य दण्डनार्थं किमर्थं वा मध्यरात्रे ग्रामीणानां निद्राभङ्गः उत्पादनीयः? सूर्योदयानन्तरं एतद्विषये चिन्तयामि' इति विचिन्त्य सुवर्चला स्वप्रकोष्ठं गतवती। अल्पे एव काले निद्रां कृतवती च।

उषःकाले पुनः द्वारताडनशब्दः श्रुतः। 'पिता आगतवान् स्यात्' इति द्वारम् उद्घाटितवती सुवर्चला। किन्तु द्वारे पिता न, अपि तु अमूल्यैः वस्त्राभरणादिभिः अलङ्कृतः कश्चन धनिकः युवकः स्थितः आसीत्।

सुवर्चला तं दृष्ट्वा पृष्टवती - ''कः भवान्? कः अपेक्षितः?'' इति।

युवकः मन्दहासं प्रकटयन् - ''वृष्ट्या आर्द्रः कश्चन वृद्धः आश्रयम् इच्छन् अत्र आगतवान् वा?'' इति पृष्टवान्।

''आम्, आगतवान्। अहं करुणया आश्रयं दत्त्वा भोजनं परिवेषितवती। किन्तु कृतघ्नः सः छुरिकया मां भाययन् आभरणानि आनेतुम् आदिष्टवान्। अहम् उपायेन तं प्रकोष्ठे बन्धने स्थापितवती। तदस्तु। वृद्धस्य आगमनवार्ता भवता कथं ज्ञाता। वृद्धस्य भवतः च कः सम्बन्धः?'' इति पृष्टवती सुवर्चला।

युवकः उच्चैः हसन् - ''सः न चोरः, अपि तु मम सेवकः'' इति उक्तवान्।

''सः भवतः सेवकः स्यात् नाम। चौर्यार्थं प्रवृत्तः चेत् चोरः एव भवति किल सः?'' इति



कोपेन पृष्टवती सुवर्चला।

युवकः पुनः अपि हसन् - "सः वस्तुतः चौर्यार्थम् न आगतवान् एव। एतत् सर्वं एकं रूपकम् इव" इति उक्त्वा वस्तुस्थितिं निवेदितवान्।

तस्य युवकस्य नाम मोहनाङ्गः इति। सप्ताहतः पूर्वं स्तेहितस्य विवाहार्थम् एतद्-ग्रामम् आगतः सः सुवर्चलां दृष्ट्वा तस्याः आकारेण व्यवहारेण च आकृष्टः अभवत्। 'लक्षाधिपस्य अद्वितीयपुत्रं मां परिणेतुं एतस्याः योग्यता अस्ति वा न वा?' इति सः परीक्षितुम् इष्टवान्। आप्तद्वारा तस्याः कुलगोत्रादिकं विचार्य रमापतेः अनुपस्थितिं प्रतीक्षमाणः एवं नाटकम् आयोजितवान् आसीत् मोहनाङ्गः।

एतत् सर्वं श्रुत्वा आश्चर्यचकितां सुवर्चलां मोहनाङ्गः उक्तवान् - "मम परीक्षायां भवती सफलतया उत्तीर्णा" इति।

"तत् कथम्?" इति उद्गच्छन्तं कोपं निगृह्णन्ती सुवर्चला पृष्टवती।

तदा युवकः नटः इव हावभावम् अभिनयन् - "वृद्धस्य आदरणेन भवत्याः उदारता-दया-वात्सल्यादयः, छुरिकां दृष्ट्वा अपि निर्भयेन स्थित्या भवत्याः धैर्यं, तस्य बन्धने भवत्याः चतुरता, समयस्फूर्तिः च निरूपिताः अभवन्। मम जीवनसहचरी भवितुं भवती अर्हा। भवत्याः विवाहार्थम् अहं सिद्धः अस्मि" इति उक्तवान् मोहनाङ्गः।

"सेवकद्वारा एवं नाटकं किमर्थं कारितवान्? यदि भवान् एतादृशं नाटकम् अन्यत्र स्वयम् अभिनयेत् तर्हि लक्षशः रूप्यकाणि सम्पादयेत्" इति वदन्ती सुवर्चला ततः गत्वा प्रकोष्ठस्य द्वारम् उद्घाटितवती। वृद्धः मन्दं बहिः आगत्य स्वयजमानस्य पृष्टतः स्थितवान्।

तदा सुवर्चला मोहनाङ्गं पश्यन्ती - "भोः महोदय! भवान् मम योग्यतापरीक्षां कृत्वा निर्णयम् अपि घोषितवान्। अहं चिन्तयामि - एतत् मूर्खतापूर्णं कार्यम् इति। अत्र शृणोतु, एवम् अविचार्य किमपि किमपि कृतवन्तं भवन्तं ग्रामरक्षकस्य वशे यत् न अर्पितवती तत् मम औदार्यम्। लक्षाधिपतिं भवन्तं तर्जयन्ती इतः गन्तुं यत् सूचयन्ती अस्मि तत् मम धैर्यम्। भवन्तं परिणेतुं निराकुर्वती यत्

अस्मि तत् मम बुद्धिमत्ता। ज्ञातं किल मम वास्तविकं स्वरूपम्। कृपया इतः गन्तुम् अर्हति भवान्" इति उक्त्वा हस्तेन द्वारमार्गं सूचितवती।

एतत् श्रुत्वा मोहनाङ्गः तस्य सेवकः च विवर्णौ जातौ। किमपि वक्तुम् अशक्तौ तौ ततः प्रस्थितौ। तत्समये द्वारि स्थितं रमापतिं दृष्ट्वा अपि अदृष्टवन्तौ इव गतवन्तौ।

रमापतिः पुत्र्याः वचनानि श्रुतवान् आसीत्। सः अन्तः आगत्य पुत्रीं प्रीत्या पृष्टवान् - "भवती एकाकिनी तिष्ठति इति स्मरन् रात्रेः अन्तिमयामे एव तद्ग्रामतः प्रस्थितवान् अहम्। अत्र तु विचित्रं दृष्टवान्। लक्षाधिपतिः परिणयेच्छया स्वयम् अत्र आगतवान्। तम् एवं कठोरवचनैः निन्दयित्वा प्रेषितवती किल भवती!" इति।

"तात! धनमदः एतस्य। 'धनेन सर्वं सिध्यति' इति चिन्तयति सः। सः वदति - 'भवत्याः योग्यतापरीक्षार्थं नाटकं कृतम्। भवती योग्यतापरीक्षायाम् उत्तीर्णा' इति। मम इष्टानिष्टस्य प्रश्नः एव नास्ति अत्र। धनेन किं सः मां क्रेतुं शक्नोति? अहं तावत् सुलभलभ्या न" इति उक्तवती सुवर्चला।

रमापतिः किञ्चित्कालम् आलोच्य पुत्रीम् उक्तवान् - "भवती मम बाल्यस्नेहितं रामभद्रं जानाति किल? प्रायः तस्य पुत्रं प्रभाकरम् अपि दृष्टवती स्यात् एव" इति।

"जानामि किल" इति उक्तवती सुवर्चला।

"ह्यः ततः एव आगन्तुम् आह्वानम् आगतम् आसीत्। सः रामभद्रः भवतीं स्नुषात्वेन प्राप्तुम् इच्छति। सः भवत्याः अभिप्रायं ज्ञातुम् इच्छति अपि। प्रभाकरः गुणी, योग्यः श्रमशीलः च। विद्यमानायाम् अल्पभूमौ एव सः सुवर्णसदृशीं फलसमृद्धिं प्राप्नोति। किं तं परिणेतुम् इच्छति वा भवती?" इति पुत्रीं पृष्टवान् रमापतिः।

अङ्गीकारं प्रदर्शयन्ती सुवर्चला मन्दहासपूर्वकं शिरः चालितवती। बाल्यस्नेहितस्य पुत्रः आत्मनः जामाता भविष्यति इति रमापतिः बहु सन्तुष्टः।






# भिक्षुकस्य दारिद्र्यम्

सिन्धूरदेशस्य राजा सुगुणसेनः। सः प्रजाः पुत्रान् इव प्रीत्या पालयति स्म। प्रजाः अपि राजानं तावता एव प्रीत्या पश्यन्ति। नगरवृद्धाः पण्डिताः च 'पूर्वजानाम् अपेक्षया एतस्य शासनम् उत्कृष्टम्' इति वदन्ति स्म। एतेन महाराजस्य सुगुणसेनस्य उन्मादः आगतः इव।

एकदा मन्त्री मार्ताण्डवर्मा राजानम् उक्तवान् - "महाप्रभो! पण्डिताः नागरिकप्रमुखाः च भवतः शासनस्य प्रशंसां कुर्वन्ति इति तु सत्यम् एव। कदाचित् सा मिथ्याप्रशंसा अपि भवेत् किल? अतः वेषान्तरेण प्रजानां मध्ये सञ्चारः उचितः इति मम अभिप्रायः। तेन जनानां वास्तविकः अभिप्रायः ज्ञातुं शक्यते" इति।

'एतत् युक्तम् एव' इति राजा अपि अङ्गीकृतवान्। अनन्तरदिने राजा मन्त्रिणा सह अन्यदेशीयस्य वेषं धृत्वा नगरसञ्चारार्थं प्रस्थितवान्।

मार्गे गमनसमये ताभ्यां कश्चन भिक्षुकः दृष्टः। मन्त्री महाराजाय एतं भिक्षुकं प्रदर्श्य - "महाराज! वयम् एतेन सह वार्तालापं कुर्मः। भवतः परिपालनविषये एतस्य अभिप्रायं ज्ञास्यामः" इति।

सुगुणसेनः शिरश्चालनपूर्वकम् अङ्गीकृत्य भिक्षुकं पृष्टवान् - "भोः! भवान् किमर्थं वा मार्गे मार्गे अटन् भिक्षायाचनं करोति?" इति।

एतत् श्रुत्वा भिक्षुकः निर्लक्ष्यभावेन उक्तवान् - "एतत् किमिति पृच्छति भोः? यस्य उदरपोषणार्थम् आहारः नास्ति सः भिक्षायाचनं करोति। गतपञ्चविंशतिवर्षेभ्यः एतया वृत्त्या जीवामि। अद्यावधि कोऽपि माम् एवं न पृष्टवान्" इति।



तदा राजा तृप्तिभावेन मन्त्रिणम् उक्तवान् - "एषः मम पितामहकालतः अपि भिक्षुकः एव" इति।

एतत् वचनं भिक्षुकः अपि श्रुतवान्। सः खेदेन उक्तवान् - "भोः! भवतः पितामहः कः इति न जानामि। पञ्चविंशतिवर्षेभ्यः एतया वृत्त्या जीवामि किल? किन्तु भिक्षावृत्तेः वास्तविकं कष्टम् इदानीम् अहम् अनुभवामि" इति।

"कोऽयं तादृशः कष्ट अनुभवः?" इति पृष्टवान् राजा।

"कालः तादृशः आगतः अस्ति। पूर्वं प्रतिदिनम् एकघण्टां यावत् भिक्षायाचनेन यथेष्टं धान्यादिकं लभ्यते स्म, कानिचन नाणकानि अपि! अनन्तरकाले तावत् प्राप्तुं दिनद्वयम् आवश्यकम् अभवत्। एषु दिनेषु तु एकसप्ताहं यावत् अटामि चेदपि मुष्टिमितं धान्यं न प्राप्नोमि। नाणकं तु नाम्ना अपि न प्राप्नोमि" इति वदन् भिक्षुकः ततः अन्यत्र गतवान्।

राजा क्षणकालं यावत् चिन्तायां मग्नः आसीत्। अनन्तरं सः मन्त्रिणम् उक्तवान् - "भिक्षुकस्य वचनेन ज्ञायते यत् अस्माकं प्रजासु धर्मचिन्तनं, परोपकारबुद्धिः, दयागुणः इत्यादयः सर्वथा विलुप्ताः इति। कथम् एवं संवृत्तम्?" इति।

तदा मन्त्री उक्तवान् - "महाप्रभो! भिक्षुकस्य वचनस्य अभिप्रायः अयं न यत् प्रजासु सद्गुणाः सर्वथा लुप्ताः इति। पञ्चविंशतिवर्षेषु आत्मना प्राप्तं दारिद्र्यं सः सूचितवान्, तावदेव" इति।

मन्त्रिणः वचनं श्रुत्वा राजा आश्चर्येण पृष्टवान् - "भिक्षुकस्य दारिद्र्यम्? किं वदति भवान्? भवतः वचनस्य अभिप्रायः मया न ज्ञातः" इति।

"महाराज! भिक्षुकः भवतः पितामहस्य काले सुखेन भिक्षां प्राप्नोति स्म। अनन्तरकाले भिक्षाप्राप्तौ क्रमशः काठिन्यम् आगतम्। एवं सः क्रमशः हीनावस्थां प्राप्नुवन् महादरिद्रः सञ्जातः" इति विवरणं दत्तवान् मन्त्री।

"एतेन स्पष्टं ज्ञायते किल प्रजासु

उत्तमगुणाः विलुप्तप्रायाः इति। तदेव मया उक्तम् आसीत्" इति उक्तवान् मन्त्रिणं पश्यन् राजा।

"महाराज! क्षन्तव्यः अयं जनः। उत्तम-गुणाः विलुप्ताः इत्यत्र न किमपि प्रमाणम्। यदि तथा जातं स्यात् तर्हि राज्ये सर्वत्र वञ्चना, लुण्ठनं, मारणं, चौर्यम् इत्यादयः प्रवृत्ताः अभविष्यन्। किन्तु राज्ये तथा परिस्थितिः सर्वथा नास्ति किल?" इति उक्तवान् मन्त्री।

तदा राजा पृष्टवान् - "एवं तर्हि भिक्षुकस्य दुर्गतेः कारणं किम् इति भवान् चिन्तयति?" इति।

"प्रजानाम् आर्थिकम् आनुकूल्यं क्रमशः यत् न्यूनं जातं तदेव कारणम् इति मम अभिप्रायः। तथापि नागरिकाः सहनया उत्तमपरिस्थितिं निरीक्षमाणाः सन्ति। भिक्षुकस्य दारिद्र्यं प्रजानां दारिद्र्यं प्रदर्शयति। इदानीम् अस्माभिः प्रजानाम् आशावादः यथा न नश्येत, सहना नष्टा यथा न स्यात् तथा विशेष-जागरूकैः भवितव्यम्" इति उक्तवान् मन्त्री।

एतेन सुगुणसेनः स्वदेशस्य परिस्थितिं सम्यक् ज्ञातवान्।

'यद्यपि राज्यं न तथा दुर्गतौ अस्ति, तथापि अत्र करणीयं बहु अस्ति। नागरिकप्रमुखादयः केवलं मुखस्तुतिं कुर्वन्ति। एतेन उन्मत्तः अहं राज्यपालने औदासीन्यं प्रकटितवान् इव। इतःपरम् एवं कदापि न भवेत्' इति चिन्तितवान् राजा।

तद्दिनतः आरभ्य सः समग्रे देशे अटन् प्रजानां सुखदुःखादिकं स्वयं परिशीलितवान्। प्रजानाम् आवश्यकताः काः इत्यपि ज्ञातवान् सः।

अनन्तरकाले प्रजानाम् आवश्यकता-पूरणार्थं विविधाः योजनाः आयोज्य 'समर्थः राजा' इति कीर्तिं प्राप्तवान्।






# १५

(शिवपुरस्य समीपे चन्द्रवर्मा सेनानी धीरमल्लः च सम्भूय सेनासाहाय्येन सर्पकेतुं पर्वतकन्दरे सङ्कटे पातितवन्तः। ततुसमये बहवः सर्पकेतुसैनिकाः चन्द्रवर्मणः पक्षम् आश्रितवन्तः। पराजितः सर्पकेतुः कैश्चित् विश्वासार्हैः भटैः सह पलायनं कृतवान्। सर्पकेतोः अनुधावनार्थं चन्द्रवर्मा सैनिकान् प्रेषितवान्। तदनन्तरम्......)

सर्पकेतोः अनुसरणं कृत्वा गताः सैनिकाः सायं सूर्यास्तसमये निराशया श्रान्त्या च प्रत्यागतवन्तः। "सर्पकेतुः कुत्र गतवान् इति वयं न ज्ञातवन्तः। पादचिह्नानाम् अवलोकनेन सः पश्चिमदिशम् अनुसृत्य गतवान् इति ऊहयितुं शक्यते" इति उक्तवन्तः ते।

भटानां प्रयत्नेन सन्तुष्टः चन्द्रवर्मा उक्तवान् - "दत्तं कार्यं सम्यक् एव निरूढवन्तः भवन्तः। प्रशंसार्हं कार्यं कृतम्" इति। अनन्तरं धीरमल्लं पश्यन् - "पश्यतु धीरमल्ल! सर्पकेतुः माहिष्मतीं उद्दिश्य न धावितवान्। सः साक्षात् कांस्यदुर्गं प्रति गच्छन् अस्ति। एतदर्थम् एव किल सः एतावद्दूरम् आगतवान्। प्रायः सः कांस्यदुर्गस्य रहस्यं सम्यक् जानीयात् अपि" इति उक्तवान्।




'आम्' इति वदन्तौ सुबाहु-धीरमल्लौ चन्द्रवर्मणः अभिप्रायम् अनुमोदितवन्तौ। 'इतःपरं माहिष्मतीनगरं गन्तव्यं वा, उत सर्पकेतोः अनुसरणं कृत्वा कांस्यदुर्गं प्रति गन्तव्यं वा?' इति चन्द्रवर्मा किञ्चित्कालं चिन्तितवान्। त्रयः अपि तद्विषये चर्चां कृतवन्तः अपि। अन्ते 'इदानीं कास्यंदुर्गस्य रहस्यं भित्त्वा, सर्पकेतुं मारयित्वा माहिष्मतीं प्रति गन्तव्यम्' इति ते ऐकमत्येन निश्चितवन्तः।

तत्क्षणे एव सैनिकान् ते एकत्रीकृतवन्तः। कांस्यदुर्गं प्रति प्रस्थिताः च। चन्द्रवर्मा सेनायाः अग्रे स्थित्वा मार्गदर्शनं कुर्वन् आसीत्। सर्पकेतोः गमनम् अनुसरन्तः ते पर्वतान् अरण्यानि च अतिक्रम्य अग्रे गतवन्तः। किञ्चिद्दूरं गमनानन्तरं एका नदी सम्मुखे आगता।

अकस्मात् प्राप्ताम् एतां नदीं दृष्ट्वा चन्द्रवर्मा चकितः। "वेगेन प्रवहन्तीम् एतां नदीं वयं कथम् उत्तरेम? एतावन्तः सैनिकाः कथं वा नदीम् उत्तरेयुः? सर्पकेतुः एतां नदीं कथम् उत्तीर्णवान्? अथवा सः अस्माकं प्रतीक्षायाम् अत्रैव कुत्रापि निलीय स्थितवान् स्यात् वा?" इति चिन्ताक्रान्तः अभवत् चन्द्रवर्मा।

एवं यदा चन्द्रवर्मा चिन्ताक्रान्तः सन् स्थितः आसीत् तदा समीपे स्थितात् वृक्षसमूहतः सर्पस्य श्वासोच्छ्वासध्वनिः श्रुतः। अनन्तरक्षणे त्रिशिरस्कः महासर्पः सशब्दम् अधः अपतत्। सर्वे सैनिकाः तं सर्पं भीत्या दृष्टवन्तः। तदा सः सर्पः मानवरूपतां प्राप्नोत्।

"चन्द्रवर्मन्!" इति उच्चैः वदन् सः सर्पमानवः चन्द्रवर्मणः समीपम् आगतवान्।

आत्मनः नामश्रवणेन जागरितः चन्द्रवर्मा आगच्छन्तं पुरुषं दृष्ट्वा अत्यानन्देन "अये! कालकेतो! भवान्!!" इति उद्गारं प्रकटयन् अग्रे गत्वा तस्य हस्तं गृहीतवान्।

"आम्, अहम् एव। भवतः अनुग्रहेण कालकेतुनाम्ना मानवरूपतां प्राप्तवान्। अहं स एव कालकेतुः यश्च कालनागनाम्ना कापालिकायाः सेवकः आसम्। भवतां शत्रुः



सर्पकेतुः किञ्चित्पूर्वं ससैन्यं नदीं तीर्त्वा गतवान्। नदीतरणार्थं तेन उपयुक्तान् काष्ठखण्डान्, उडुपान् च अहम् एतत्तीरम् आनीय वृक्षाणां मध्ये स्थापितवान्" इति उक्तवान् कालकेतुः।

अनन्तरं कालकेतुः - "आगच्छन्तु" इति वदन् तान् सर्वान् नदीतीरं नीतवान्। तत्र नदीप्रवाहं प्रदर्शयन् - "चन्द्रवर्मप्रभो! 'भवतः साहाय्यं करणीयम्' इति उद्देशेन शङ्खपर्वततः अहं साक्षात् अत्र आगतवान्। बहुदिनेभ्यः पूर्वम् एव कापालिका दिवङ्गता। मरणतः पूर्वं सा भूत-भविष्यद्-वर्तमान-दर्शकं काचकगोलकं मानवास्थिकां च मह्यं दत्तवती। तस्य आधारेण भवतः कष्टस्थितिम् अहं ज्ञातवान्। भवतः शत्रुः मम अपि शत्रुः एव इति अहं पूर्वम् एव उक्तवान् किल? इदानीं सः दुष्टः सर्पकेतुः कुत्र स्यात् इति पश्यामः वा?" इति पृच्छन् वृक्षाणां मध्यतः काचकगोलकं बहिः आनीतवान्। मन्त्रं जपन् तत् मानवास्थिकया स्पृस्टवान् अपि।

अनन्तरक्षणे काचकगोलके अपूर्वं किञ्चन दृश्यं दृष्टम्।

तत्र सूर्यकान्त्या प्रकाशमानम् आसीत् कास्यंदुर्गम्। दुर्गस्य उत्तरभागे कांस्यमयं मुखद्वारम् सुविशालम् उद्घाटितम् आसीत्। द्वारस्य पुरतः केचन रक्षकभटाः स्थिताः आसन्। दुर्गस्य अन्तः शिथिलेषु भवनेषु सर्पकेतोः सैनिकाः यथेष्टं विहरन्तः रत्नानां सुवर्णाभरणानां च सङ्ग्रहणे तत्पराः आसन्। सर्वे ते सन्तोषातिरेकेण उन्मत्ताः इव!

"दृष्टं वा महाप्रभो! शत्रूणां रहस्यं ज्ञातं किल? वयं यथा श्रुतवन्तः तथा इदानीं कांस्यदुर्गस्य भित्तिं समुद्रः न क्षालयति। शतवर्षेभ्यः पूर्वं प्रायः तथा स्यात्। किन्तु इदानीं समुद्रतीरं कांस्यदुर्गतः बहुदूरे अस्ति। समुद्रस्थितेः चिह्नम् अपि तत्र न दृश्यते" इति उक्तवान् कालकेतुः।

'विना श्रमेण समग्रा परिस्थितिः ज्ञाता' इति चन्द्रवर्मा अतीव सन्तुष्टः। सः सैनिकान् नदीतरणार्थम् आदिष्टवान्। दूरदर्शिना कालकेतुना सङ्गृहीतानि उडुपादीनि इदानीम्

अत्युपयुक्तानि जातानि। सर्वे सैनिकाः अहमहमिकया नदीम् उत्तीर्णवन्तः।

तदनन्तरं कालकेतुः अश्वम् आरुह्य अग्रे गच्छन् मार्गं प्रदर्शितवान्। अन्ये सर्वे वेगेन तम् अनुसृतवन्तः।

एकघण्टा- प्रयाणेन ते एकम् अत्युन्नतं दुर्गं दृष्टवन्तः। सर्वे सकुतूहलं वेगेन दुर्गभित्तिसमीपं गत्वा ततः उत्तरद्वारम् उद्दिश्य गतवन्तः।

एतेषां गमनसमये उत्तरद्वारं पिहितम् आसीत्। चन्द्रवर्मा सुबाहुः च समीपं गत्वा द्वारं परीक्षितवन्तौ। द्वारं कांस्यलोहेन सुदृढं निर्मितम् आसीत्। एतादृशस्य बलयुतस्य द्वारस्य भञ्जनं कथं वा शक्येत?

अत्रान्तरे दुर्गस्य भित्तेः उपरि स्थितस्य सर्पकेतोः ध्वनिः श्रुतः। सर्पकोतोः पार्श्वे केचन सैनिकाःहस्ते कण्डोलान् महास्थालिकाः गोण्यः च गृहीत्वा स्थिताः आसन्।

सर्पकेतुः स्वपार्श्वे स्थितान् सैनिकान् चन्द्रवर्मपक्षीयेभ्यः सैनिकेभ्यः प्रदर्शयन् - ''भो भोः, अत्र पश्यन्तु! मम सैनिकानां हस्ते स्थितेषु कण्डोलेषु गोणीषु स्थालिकासु च अमूल्यानि रत्नानि सुवर्णाभरणानि च सन्ति। मम पक्षं ये आगच्छन्ति ते एतानि प्राप्स्यन्ति। तादृशी इच्छा येषाम् अस्ति तान् अन्तः स्वीकरोमि। मम वचनं सत्यं वा न वा इति सम्यक् ज्ञात्वा निर्णयं स्वीकुर्वन्तु'' इति



द्विवारम् उच्चैः उक्तवान्।

अनन्तरं तस्य सैनिकाः गोणीषु कण्डोलेषु स्थालिकासु च स्थितानि सुवर्णरजताभरणानि रत्नानि च चन्द्रवर्मणः सैनिकानाम् उपरि पातितवन्तः।

चन्द्रवर्मणः सैनिकाः तानि रत्नादीनि प्राप्तुम् अहमहमिकया प्रवृत्ताः। आगमनस्य उद्देशं विस्मृतवन्तः एव। एवं सर्पकेतोः तन्त्रम् आत्मघातुकं ज्ञात्वा चन्द्रवर्मा उक्तवान् - "सुबाहो! इदानीम् एकम् उपायं चिन्तयाम। भवान् शत्रुपक्षं प्रवेष्टुम् इच्छन् इव अभिनयन् कथञ्चित् दुर्गद्वारम् उद्घाटयतु। आत्मनः निश्चयम् उच्चैः घोषयतु। सर्पकेतुः द्वारम् उद्घाटयति एव। भवान् त्वरया अन्तः प्रविशतु। अहं धीरमल्लः च सैन्येन सह आगच्छावः। अनन्तरं समूहाक्रमणेन तान् सर्वान् नाशयेम। वयं द्वारं भित्त्वा वा अन्तः आगच्छेम इति ज्ञात्वा एव सर्पकेतुः एवं भेदोपायम् आश्रितवान्। वयम् अपि भेदोपायेन एव कार्यं साधयेम" इति।

सुबाहुः अपि एतत् अङ्गीकृतवान्। सैनिकानां समीपं गत्वा रहसि वार्तालापं कृतवान्।

अकस्मात् चन्द्रवर्मणः सैन्ये कोलाहलः उत्पन्नः।

केचन 'सर्पकेतुमहाराजः जयतात्! सर्पकेतुचक्रवर्ती जयतात्!' इति उच्चैः उद्घोषयन्तः दुर्गद्वारम् उद्दिश्य गतवन्तः।





अन्ये केचन तेषां गमनं निवारयन्तः इव कृतकं युद्धम् अभिनीतवन्तः। एवं सैन्ये उत्पन्ने भागद्वये कपटकलहः प्रवृत्तः। चन्द्रवर्मा धीरमल्लः च अपि अस्मिन् कलहे प्रविष्ट-वन्तौ।

'चन्द्रवर्मणः सैन्ये कोलाहलः उत्पन्नः। मम तन्त्रं फलकारि जातम्' इति चिन्तयन् सर्पकेतुः विकटाट्टहासं प्रदर्शयन् - "दुर्गस्य द्वारम् उद्घाटयन्तु। शत्रुपक्षीयाः बहवः अस्मत्पक्षं प्रवेष्टुम् इच्छन्ति। चन्द्रवर्मादयः मां किमिति चिन्तयन्ति? सर्वान् एतान् रणदेव्यै बलिम् अर्पयामि' इति उच्चैः उक्तवान्।

कांस्यदुर्गस्य महाद्वारं सशब्दम् उद्घाटितम् अभवत्।

यावत् दुर्गद्वारम् उद्घाटितं तावत् सर्पकेतोः अट्टहासः समाप्तः अभवत्। यतः चन्द्रवर्मणः सैनिकाः प्रवाहरूपेण अन्तः प्रविष्टवन्तः। सुबाहुः पुरतः आगतान् सर्वान् शत्रून् नाशयन् अग्रे गतवान्। चन्द्रवर्मा धीरमल्लः च यमकिङ्करौ इव अन्तः प्रविष्टवन्तौ। कदलीवने गजानां समूहस्य प्रवेशः इव अभवत् तत्रत्या परिस्थितिः। अवशिष्टाः केचन शत्रुसैनिकाः भीत्या इतस्ततः पलायितवन्तः।

प्रवृत्तां वञ्चनां ज्ञात्वा सर्पकेतुः कोपेन प्रज्वलितः अभवत्। सः उन्मत्तः इव इतस्ततः सञ्चरन् भटान् कठोरम् आज्ञापितवान्। भटाः चन्द्रवर्मणः सैनिकानाम् उपरि महाशिलाः पातयितुम् आरब्धवन्तः।

एतत् दृष्ट्वा चन्द्रवर्मा सुबाहुम् उक्तवान् - "सुबाहो! एतस्य सर्पकेतोः सजीवग्रहणार्थं प्रयत्नः करणीयः। 'भवान् दुर्गभित्तेः शिथिलभागम् आरुह्य पृष्टतः गत्वा प्रयत्नं करोतु। सजीवग्रहणं न साध्यं चेत् शिरच्छेदं करोतु" इति।

सुबाहुः कैश्चित् सैनिकैः सह भित्तिशिलाः आरोहन् भित्तेः उपरिभागं प्राप्तवान्। किन्तु 'सर्पकेतोः ग्रहणम् असाध्यं स्यात्' इति तस्य मनसि भावना उत्पन्ना।

'आत्मनः मरणं सुनिश्चितम्' इति निश्चित्य सर्पकेतुः राक्षसः इव व्यवहरन्

प्राणानाम् आशां त्यक्त्वा पुरतः आगतान् मारितवान्। तस्य एतं व्यवहारं द्रष्ट्वा चन्द्रवर्मपक्षीयाः सैनिकाः भीत्या स्तब्धाः अभवन्।

"चन्द्रवर्मन्! सर्पकेतोः युक्तः प्रतिस्पर्धी अहम् एव। इदानीम् एकं चमत्कारं पश्यन्तु। सः भित्तितः महाशिला इव अधः पतिष्यति। अनन्तरं किम्, अस्थिखण्डाः सङ्ग्रहणीयाः" इति वदन् कालकेतुः खड्गं हस्ते स्वीकृत्य दुर्गभित्तेः उपरि धावितवान्।



पुरतः आगच्छन्तं कालकेतुं दृष्ट्वा सर्पकेतुः उच्चैः गर्जनं कुर्वन् अग्रे आगतवान्। कालकेतुः तस्य खड्गप्रहारतः आत्मानं रक्षन् स्वयम् अपि वेगेन खड्गं चालितवान।

"सर्पकेतो! भवान् इदानीं कालकेतोः पुरतः अस्ति। कालकेतुः नाम भवतः कृते कालयमः इव। त्रिशिरस्कः सर्पोऽपि अस्मि अहम्" इति वदन् सर्पाकृत्तिं धृत्वा फूत्कारं कृतवान् सः।

एतेन सर्पकेतुः क्षणकालं स्तब्धः। भीत्या कम्पमानः सः किमपि अस्पष्टं वदन् पदशः पृष्टतः गतवान्। कालकेतुः फणया तं किञ्चिदिव नोदितवान्। सर्पकेतुः आक्रन्दनं कुर्वन् अधोमुखतया पतितवान्।

सर्पकेतोः मरणेन युद्धं शान्तम् अभवत्। चन्द्रवर्मणः पक्षे इदानीं सन्तोषस्य तरङ्गः!

चन्द्रवर्मा तस्यां रात्रौ तत्र एव स्थितवान्। कालकेतुः 'अहम् अत्र कांस्यदुर्गे एव स्थातुम् अर्हामि वा?' इति पृष्टवान्। 'तथास्तु' इति अनुमतिं दत्त्वा चन्द्रवर्मा मौक्तिक-रत्नादीनि सुवर्णाभरणादिकम्, अपारं धनराशिं च स्वीकृत्य सर्वैः सैनिकैः सह ततः प्रयाणम् आरब्धवान्।

दिनद्वयस्य प्रयाणानन्तरं केचन रुद्रपुर-निवासिनः चन्द्रवर्मणः समीपम् आगत्य 'श्रीमन्! अस्माकं राजा शिवसिंहः सर्पकेतोः मरणवार्तया भीतः सन् अरण्यं प्रति धावित-वान्। इदानीम् अत्र शासकाभावतः अराजकता उत्पन्ना अस्ति। अतः काऽपि पर्यायव्यवस्था उपकल्पनीया' इति प्रार्थित-वन्तः।

चन्द्रवर्मा तेषां प्रार्थनाम् अङ्गीकृत्य

सर्वेषाम् अनुमतिम् अपि स्वीकृत्य वृद्धस्य पुत्रं देवलं रुद्रपुरसिंहासने उपवेशितवान्। ततः चन्द्रवर्मा माहिष्मतीनगरं प्रति प्रस्थितः। एतावता एव माहिष्मतीनगरे सर्पकेतोः मरणवार्ता सर्वत्र प्रसृता आसीत्। एतया वार्तया सर्वे सन्तोषातिरेकेण नृत्यं कृतवन्तः। नगरं तोरणादिभिः अलङ्कृतवन्तः। मङ्गल-वाद्यैः सह आगत्य चन्द्रवर्माणं स्वागतीकृत-वन्तः च।

एवं स्वागतार्थम् आगताः ते नगरप्रमुखाः 'भवान् एव चक्रवर्ती भवतु' इति चन्द्रवर्माणं प्रार्थितवन्तः। किन्तु चन्द्रवर्मा एतत् न अङ्गीकृतवान्। ''यशोवर्धनस्य ज्येष्ठ-कुमारस्य तपोवर्धनस्य समीपं पुरोहितं प्रेषयन्तु। तम् एव सिंहासने उपवेशयन्तु'' इति सः सूचितवान्।

कुमारः तपोवर्धनः माहिष्मतीसमीपे एव अरण्ये कुटीरं निर्माय निवसति स्म। चन्द्रवर्मा मन्त्रि-पुरोहितादिभिः, पुरप्रमुखैः च सह तस्य समीपं गत्वा सिंहासनारोहणार्थं विनयेन प्रार्थितवान्।

किन्तु तपोवर्धनः तेषां प्रार्थनां न अङ्गी-कृतवान्। ''अहं पूर्वम् एव सर्वसङ्गपरित्यागं कृतवान्। सिंहासनम् आरोढुं मम सर्वथा इच्छा नास्ति। चन्द्रवर्मा भवतां सर्वेषां गौरवादरपात्रं, राज्यशासने समर्थः, चक्रवर्ती भवितुं योग्यः च। अतः तम् एव सिंहासने उपवेशयन्तु'' इति सः उक्तवान्।

नगरप्रमुखैः एतत् अनिवार्यतया अङ्गी-कृतम्। निश्चिते शुभे मुहूर्ते तपोवर्धनः राजधानीम् आगत्य स्वहस्तेन चन्द्रवर्मणः शिरसि चक्रवर्तिकिरीटं स्थापितवान्।

प्रजानां जयकारध्वनिः दिगन्तरेषु प्रति-ध्वनितः अभवत्। चन्द्रवर्मा धीरमल्लं सबाहुं च क्रमशः मुख्यमन्त्रिस्थाने सेनापतिस्थाने च नियोजितवान्। अनन्तरं प्रजारञ्जकः सन् चिरकालं राज्यं शासितवान्।

– (समाप्ता)






# बुद्धिमती नर्मदा

त्रिविक्रमस्य निरन्तरपीडातः मुक्तिं प्राप्तुं वेतालः कथां चिन्तयन् आसीत्। तावति काले तत्र आगतः त्रिविक्रमः वृक्षम् आरुह्य शवं स्कन्धे आरोपितवान्। वृक्षतः अवतीर्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत् - ''अये त्रिविक्रममहाराज! कोऽयम् उद्यमः भवतः? किन्निमित्तं भवान् एवं निस्वार्थभावनया कार्यं करोति? कदाचित् स्वार्थ-निस्वार्थयोः भेदं ज्ञातुम् एव कष्टम् अनुभवामः। महा-महिमान्वितः ज्ञानशिखः नाम योगी एव कदाचित् सम्यक् विवेचनम् अकृत्वा निर्देषिण्याः मनोव्यथाम् उत्पादितवान्। एवं स्थिते सामान्यानां का वा कथा? मार्गयास-परिहारार्थं ज्ञानशिखस्य कथां वदामि। श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालः कथाम् आरब्धवान्—

''करवीरपुरं धर्मवीरः नाम माण्डलिकः

## वेतालकथा



पालयति स्म। तस्य पुत्रीद्वयम् अस्ति। ज्येष्ठा नर्मदा, कनिष्ठा नीरदा। यद्यपि उभे अपि सुन्दर्यौ, तथापि नीरदायां नर्मदापेक्षया अधिकं सौन्दर्यम्। सुखभोगादीनाम् अपेक्षा अपि नीरदायाः एव अधिकम्। धने, अधिकारे, अलङ्कारे चापि नीरदायाः विशेषासक्तिः।

कदाचित् पद्मकेतुः नाम गन्धर्वः आकाशमार्गेण गच्छन् वने विहरन्तीं नर्मदां दृष्टवान्। तस्याः सौन्दर्येण आकृष्टः सः अग्रे गन्तुम् अशक्तः सन् भूमौ अवतीर्णवान्। नर्मदायाः समीपं गत्वा "सुन्दरि!" इति मन्दम् उक्तवान् च।

तत् श्रुत्वा चकिता नर्मदा परिवृत्य दृष्टवती। आश्चर्येण स्तब्धा अभवत् च।

तदा पद्मकेतुः उक्तवान् - "सुन्दरि! अहं कश्चन गन्धर्वः। पद्मकेतुः इति मम नाम। भवत्याः दिव्यसौन्दर्यम् आकाशमार्गे गच्छतः मम आकर्षणम् अकरोत्। अहं भवतीं परिणेतुम् इच्छामि। मम परिणयेन भवती गन्धर्वलोक-वाससुखम् अनुभविष्यति" इति।

क्षणकालं मौनं स्थित्वा नर्मदा उक्तवती - "अकस्मात् मिलितः भवान् एवं विवाह-प्रस्तावं करोति चेत् किं वदेयम्? श्वः साङ्कालपर्यन्तम् अवधिं ददातु। उत्तरं दास्यामि" इति। गन्धर्वः तत् अङ्गीकृत्य आकाशमार्गम् आश्रित्य गतवान्।

तत्क्षणतः मध्यरात्रपर्यन्तं नर्मदा गन्धर्वस्य वचनं स्मरन्ती चिन्तामग्ना एव आसीत्। अन्ते मनसि किमपि निश्चित्य निश्चिन्ततया निद्रां कृतवती।

अनन्तरदिने सायङ्काले नर्मदा विहारार्थं तत् एव उद्यानम् आगतवती। किञ्चित्-कालानन्तरं गन्धर्वः पद्मकेतुः तत्र आगत-वान्।

नर्मदा विनयेन उक्तवती - "भवता पृष्टस्य प्रश्नस्य विषये अहं बहु चिन्तितवती। किम् उत्तरं वक्तव्यम् इति इतोऽपि चिन्तयन्ती अस्मि इव। मम उत्तरम् अनन्तरं कथयिष्यामि। ततः पूर्वं भवान् तत्र मालती-लतामण्डपे चन्द्रशिलायाः उपरि उपविष्टां मम अनुजां पश्यतु। तया सह वार्तालापं कृत्वा आगच्छतु च" इति।



नर्मदायाः सूचनानुसारं पद्मकेतुः लता-मण्डपस्य समीपं गतवान्। तत्र नीरदा पुष्पमालां रचयन्ती चन्द्रशिलायाः उपरि उपविष्टा आसीत्। तस्याः सौन्दर्यातिशयेन आकृष्टः पद्मकेतुः मन्दस्वरेण 'सुन्दरि!' इति आहूतवान्।

शिरः उन्नमय्य गन्धर्वं दृष्ट्वा नीरदा सन्तोषेण आश्चर्येण च मूका अभवत्।

पद्मकेतुः मन्दहासं प्रकटयन् उक्तवान् - "सुन्दरि! नारीमणे! पद्मकेतुनामकः गन्धर्वः अहम्। भवत्सदृशी सुन्दरी अस्मिन् लोके अन्या न स्यात् एव। भवती यदि अङ्गीकरोति तर्हि अहं भवतीं परिणेतुम् इच्छामि। तेन अहम् अपि धन्यः भवेयम्, भवती अपि स्वर्गसुखम् अनुभवेत्" इति।

एतेन प्रशंसनेन परमसन्तुष्टा नीरदा विवाहार्थम् अङ्गीकारं प्रकटितवती।
पद्मकेतुः 'एवं तर्हि एतत्क्षणे एव गान्धर्व-विधिना विवाहः भवतु' इति सूचितवान्।

नीरदा एतत् न अङ्गीकृतवती। "एवं क्रमेण विवाहः भवति चेत् एषः विषयः केनापि न ज्ञायते एव। मम विवाहः सवैभवं भवेत्, सर्वे जानीयुः च इति मम अभिलाषः। अतः शुभे मुहूर्ते सवैभवं विवाहः प्रचलतु" इति उक्तवती सा।

'भवती यथा इच्छति तथा' इति उक्त्वा पद्मकेतुः 'पुनः आगच्छामि' इति च सूचयित्वा ततः निर्गतवान्। नीरदा तु अत्यानन्देन अन्तःपुरम् आगतवती। नर्मदां प्रवृत्तं सर्वं निवेदितवती च।

नर्मदा अनुजायाः वचनं श्रुत्वा - "नीरदे! यत् प्रवृत्तं तत् मया ज्ञायते एव। एतद्विषये अहं भवतीं किञ्चित् निवेदयितुम् इच्छामि" इति उक्तवती।

अग्रजायाः सूचनां श्रोतुम् अनिच्छन्ती अपि नीरदा पृष्टवती - "किं तत्?" इति।

"एषः पद्मकेतुः प्रथमं मां दृष्टवान्। परिणेष्यामि इति उक्तवान् च। तस्य परीक्षणार्थम् अहं तं भवत्याः समीपं प्रेषितवती। भवतीं दृष्ट्वा सः मां विस्मृतवान्। भवतीं परिणेष्यामि इति उक्तवान् च।



एतेन तस्य चपलचित्तता स्पष्टं ज्ञायते। एषः विश्वासार्हः तु सर्वथा न एतादृशं परिणेष्यति चेत् भवत्याः जीवनं दुःखमयं भवेत्'' इति उक्तवती नर्मदा।

अग्रजायाः वचनं उपेक्षमाणा नीरदा उक्तवती - ''दिव्यपुरुषः गन्धर्वः स्वयं परिणयेच्छां प्रकटीकृतवान्। एतत् निराकर्तुं कथं वा शक्येत? उपस्थितां भाग्यलक्ष्मीं कः वा निराकुर्यात्? आवास्तविकं किमपि विचिन्त्य अदृष्टं निराकुर्यां वा? संशयात्मा विनश्यति। अतः अहं तु एतं परिणेष्यामि एव। यत् भवति तत् भवतु नाम'' इति।

अनन्तरम् एकमासाभ्यन्तरे कञ्चित् माण्डलिकपुत्रं नर्मदा परिणीतवती। नीरदा-पद्मकेत्वोः विवाहः अपि सम्पन्नः। नर्मदायाः जीवनं सुखमयं जातम्। नीरदायाः जीवने सुखं क्षणिकम् अभवत्। सा दुःखसागरे पतिता।

एकदा गन्धर्वलोकं गतः पद्मकेतुः न प्रत्यागतवान् एव। नीरदा दुःखेन अवमानेन च म्लाना अभवत्। अनुजायाः परिस्थितिं दृष्ट्वा नर्मदा अपि सङ्कटम् अनुभवति।

एवं स्थिते कदाचित् महातपस्वी इति ख्यातः ज्ञानशिखः नाम योगी करवीरपुरम् आगतवान्। 'एषः दुःखपरिहारोपायं कमपि सूचयेत्' इति चिन्तयित्वा नर्मदा नीरदां तस्य समीपं नीतवती।

ज्ञानशिखः नर्मदायाः सर्वाणि वचनानि श्रुत्वा तां तीक्ष्णदृष्ट्या पश्यन् उक्तवान् - ''नर्मदे! स्वार्थपरायणा भवती बुद्धिमत्तया व्यवहारं कृतवती'' इति।

नर्मदा किमपि वक्तुम् असमर्था सती मौनं स्थितवती।

अनन्तरं ज्ञानशिखः नीरदाम् उक्तवान् - ''पुत्रि! भवतीम् एकं मन्त्रम् उपदिशामि। तं जपन्ती शक्तिस्वरूपिणीं पार्वतीं भक्त्या ध्यायतु। एतेन भवत्याः जीवनं सुखमयं भविष्यति'' इति।

केषुचित् एव दिनेषु नीरदायाः उपासना फलिता। पद्मकेतुः तस्याः समीपम् आगतवान्। द्विगुणीकृतेन प्रेमादरेण तया सह जीवितवान् च।

वेतालः एवं कथां समाप्य - "राजन्! 'भवतीं परिणेष्यामि' इति उक्त्वा नर्मदां वञ्चितवन्तं पद्मकेतुं नीरदा परिणीतवती। तथापि सन्तोषेण एव आसीत् नर्मदा। एतादृशीं नर्मदां स्वार्थपराम् उक्तवान् ज्ञानशिखः। एतत् युक्तं वा? ज्ञानशिखस्य तावदपि विविचनशक्तिः नास्ति वा? एतस्य युक्तम् उत्तरं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति" इति अवदत्।

तदा त्रिविक्रमः उक्तवान् - "एतयोः मध्ये अनुजा नीरदा स्वभावतः मुग्धा सरला च। इच्छायाः निग्रहणं सा न जानाति। अतः तस्याः विषये सर्वदा अनुकम्पः एव उचितः, न तु द्वेषः।

नर्मदा तु अतीव बुद्धिमती। अतः सा पद्मकेतुं प्रति अङ्गीकारसूचनतः पूर्वं स्वभगिनीं प्रयोगपशुत्वेन उपयुक्तवती। 'यदि पद्मकेतुः चञ्चलचित्तः तर्हि सः नर्मदां दृष्ट्वा ताम् एव परिणेष्यति। मया अनुभोक्तव्यं सङ्कटं सा अनुभविष्यति। यदि सः दृढचित्तः तर्हि अहं सुखम् अनुभविष्यामि' इति चिन्तितवती नर्मदा। अतः एव 'स्वार्थपरा भवती' इति ज्ञानशिखः तां निन्दितवान्।

नर्मदायाः पद्मकेतुविषये विश्वासः न आसीत् एव। एतादृशं पद्मकेतुं भगिन्याः समीपं प्रेषयन्ती नर्मदा एकेन एव प्रयत्नेन कार्यद्वयं साधितवती। स्वार्थः अपि साधितः, चञ्चलचित्तः पद्मकेतुः अपि निवारितः।

किन्तु अत्र तया नीरदायाः मुग्धतायाः सरलतायाः च दुरुपयोगः स्वीकृतः। एतत् सर्वथा अनुचितम् आसीत्। अतः ज्ञानशिखः तां स्वार्थपराम् उक्तवान्। अयुक्ताचरणं किं वा अस्ति अत्र?" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः वेतालः शवसहितम् अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान्।





# उत्तमः यजमानः

विरिञ्चिपत्तनस्य राजमार्गे वरदराज-नामकः कश्चित् नूतनतया एकं धान्यानाम् आपणं स्थापितवान्। आपणे कार्यं कर्तुम् एकं सेवकम् अपेक्षमाणः सः तदर्थम् अन्वेषणं कुर्वन् आसीत्।

वरदराजस्य सेवकान्वेषणवार्तां योगिनाथः श्रुतवान्। योगिनाथः वाणिज्यकार्येषु चतुरः। सः भोजस्य आपणे सेवकः आसीत्। किन्तु केनापि कारणेन सः तत्र कार्यं कर्तुं न इच्छति।

एकदा योगिनाथः वरदराजस्य समीपं गत्वा 'मह्यम् उद्योगं ददातु' इति प्रार्थितवान्। वरदराजः तं परीक्षादृष्ट्या पश्यन् "इदानीं कुत्र कार्यं कुर्वन् अस्ति भवान्?" इति पृष्टवान्।

तदा योगिनाथः "अहं भोजस्य आपणे कार्यं कुर्वन् अस्मि। वाणिज्यकार्येषु समीचीनं प्रशिक्षणं प्राप्तवान् अस्मि। भोजः यावत् वेतनं ददाति, तदपेक्षया किञ्चित् अधिकं भवान् दास्यति चेत्, अहं भवतः आपणे कार्यं करोमि" इति उक्तवान्।

वरदराजः किञ्चित् आलोच्य "भवते उद्योगं दातुम् अहं तु सिद्धः एव। किन्तु भवान् भोजस्य आपणं किमर्थं त्यजति? यथार्थं वदतु। अधिकवेतनस्य अपेक्षा अस्ति चेत्, भोजः एव दद्यात्। अतः अधिकवेतनस्य इच्छया भोजस्य आपणं त्यजामि इति भवतः वचने मम विश्वासः नास्ति" इति उक्तवान्।

"आर्य, तस्मिन् विषये रहस्यं किमर्थम्? भोजस्य समीपे कार्यं नाम असिधाराव्रतम् एव। अस्माकं प्रत्येककार्ये अपि सः दोषं पश्यति। एतादृशकार्यापेक्षया बुभुक्षया मरणम् एव वरम्। सहिष्णुतायाः अपि काचित् सीमा भवति किल?" इति उक्तवान् योगिनाथः।

'श्वः परश्वः वा मदीयं निर्णयं वदामि' इति तु योगिनाथम् एतावत्प्रीत्या श्लाघते। किन्तु सः भवतः समीपे कार्यं बहुक्लेशदायकम् च इति निन्दति। भवान् यावत् वेतनं ददाति, तदपेक्षया किञ्चित् अधिकं ददामि चेत्, सः मम आपणे कार्यं कर्तुं सिद्धः अस्ति। मम नूतने आपणे कार्यं कर्तुं सेवकस्य अन्वेषणं कुर्वन् अस्मि अहम्" इति उक्तवान्।

"एवं तर्हि भवतः कश्चित् बन्धुः योगिनाथाय कन्यां दातुम् इच्छति इत्यादिकं सर्वम् असत्यं वा?" इति क्रोधेन पृष्टवान् भोजः।

"योगिनाथस्य स्वभावं ज्ञातुम् अहं तथा उक्तवान्। भवतः उपरि तस्य किञ्चिदपि अभिमानः नास्ति इति भवान् अपि इदानीं उक्त्वा वरदराजः योगिनाथं प्रेषितवान्। अनन्तरं तदानीम् एव ततः प्रस्थाय, भोजस्य समीपं गत्वा तं "भवतः आपणे कार्यं करोति किल योगिनाथः इति कश्चित्? तस्मै स्वीयां कन्यां दातुम् इच्छति मम कश्चित् बन्धुः। अतः कृपया योगिनाथस्य गुणस्वभावादिकं वदतु" इति पृष्टवान्।

तस्य वचनं श्रुत्वा भोजः "योगिनाथः बहु चतुरः युवकः, विश्वासार्हः अपि। सः बहुदिनेभ्यः मम वाणिज्यकार्येषु स्वीयपुत्रवत् साहाय्यं कुर्वन् अस्ति। मम एतम् अभिप्रायं वरान्वेषकं भवतः बन्धुं निवेदयतु" इति उक्तवान्।

तस्य वचनं श्रुत्वा वरदराजः हसन् "भवान्



ज्ञातवान् खलु?" इति उक्तवान् वरदराजः।

तत् वचनं श्रुत्वा भोजः वरदराजम् उग्रं पश्यन् "योगिनाथस्य विचारे मम अभिप्रायः कीदृशः अस्ति इति खलु भवान् ज्ञातुम् इच्छति? मम अभिप्रायम् अहं सुस्पष्टम् उक्तवान्। भवान् तु पृच्छां विना अपि मद्विषये योगिनाथस्य अभिप्रायम् उक्तवान्। मद्विषये तस्य यः कोऽपि अभिप्रायः स्यात् नाम, तद्विषयके मम अभिप्राये कोऽपि व्यत्यासः नास्ति। मम अभिप्रायः अचलः" इति उक्तवान्।

"भवतः वर्तनम् अतीव आश्चर्यजनकम् अस्ति" इति उक्तवान् वरदराजः।

"अत्र आश्चर्यस्य अवकाशः एव नास्ति। सेवकस्य तावती आवश्यकता अस्ति चेत्, सः योगिनाथः यावत् वेतनम् इच्छति तावत् दत्त्वा भवतः आपणे तं नियोजयतु। मम कोऽपि आक्षेपः नास्ति। सः कार्यपटुः विश्वासार्हः च। एषः मम दृढः अभिप्रायः। अत्र किमपि परिवर्तनं नास्ति" इति भोजः वरदराजं प्रति निन्दाभङ्ग्या उक्तवान्।

अनन्तरं वरदराजः किमपि अनुक्त्वा नतमस्तकः भूत्वा ततः निर्गतवान्।

आपणस्य द्वारसमीपे स्थित्वा, द्वयोः सम्भाषणं शृण्वन् आसीत् योगिनाथः। सः सद्यः एव अन्तः आगत्य, भोजस्य पादयोः उपरि पतित्वा "आर्य, इदानीम् अहं ज्ञातवान् यत् अन्यस्य विश्वाससम्पादनम् एव अमूल्यधनं, तथा अभिमानप्राप्तिः एव श्रेष्ठसम्पत्तिः इति। सन्दर्भानुसारेण कुटिल-व्यवहारं कृत्वा स्वार्थं साधयितुम् अहं प्रयत्नं कृतवान्। कृपया मां क्षाम्यतु" इति उक्तवान्।

अनन्तरं योगिनाथः भोजस्य आपणे एव अनेकवर्षपर्यन्तं विश्वासी सेवकः आसीत्। तेन सः वाणिज्यसम्बन्धिविषयान् सम्यक् ज्ञातवान्।

अनन्तरं भोजस्य प्रोत्साहेन सः स्वीयं वाणिज्यम् आरभ्य क्रमेण अभिवृद्धिं प्राप्तवान्।






अस्माकं देवालयाः

# तिरुपतिः

एकदा नारदः महाविष्णुं द्रष्टुं गतः वार्तालापमध्ये भरतखण्डे पूर्वभागे स्थितस्य शेषाचलनामकस्य सप्तपर्वतानां समूहस्य सौन्दर्यं बहु श्लाघितवान्।

अनन्तरं कदाचित् विष्णुः परिसरे विहरन् शेषाचलम् आगतवान्। तत्रत्याम् असदृशं प्रकृतिसौन्दर्यं दृष्ट्वा सः अतीव सन्तुष्टः। सः एकस्याः शिलायाः उपरि उपविश्य ध्याने मग्नः अभवत्।





किञ्चित्कालानन्तरं विष्णुः ततः उत्थाय गतवान्। किन्तु तस्य निर्गमनानन्तरम् अपि शिलायाः उपरि तदीयं प्रतिरूपं तत्रैव स्थितम्। तस्मिन् प्रतिरूपे विष्णोः अंशः तथैव आसीत्। कालान्तरे तं विग्रहं परितः वृक्षाः वल्मीकाः च स्वेच्छया प्रवृद्धाः।




तत्प्रान्ते स्थितेन केनचित् पशुपालकेन परिशीलितं यत् एका गौः प्रतिदिनं समूहतः गत्वा पर्वतम् आरुह्य प्रत्यागच्छति इति। सा गौः गृहे क्षीरं न दोग्धि। 'किमर्थम् एषा एवं करोति?' इति ज्ञातुं सः गोपालकः एकदा ताम् अनुसृतवान्।

गौः पर्वतम् आरुह्य एकत्र गुल्मस्य पार्श्वे स्थितवती। तस्याः ऊधस्तः क्षीरं धाराकारेण आगतम्। एतत् गोपालकः परिशीलितवान्। तत्र विग्रहः अस्ति इत्यपि सः ज्ञातवान्। एतेन आश्चर्यचकितः भीतः च सः धावन् पर्वतात् अवतीर्णः।





पशुपालकः आत्मना दृष्टं विषयं महाराजाय सूचितवान्। राजा पर्वतम् आरुह्य वल्मीके स्थितं विष्णुविग्रहं दृष्टवान्। पार्श्वे स्थितस्य अन्यपर्वतस्य शिखरे तं विग्रहं प्रतिष्ठाप्य मन्दिरं निर्मितवान्। कश्चन शिल्पी स्वकौशलेन विग्रहम् इतोऽपि सुलक्षणोपेतं कृतवान्।

सप्ताचलाधीशः वेङ्कटेश्वरः इति प्रसिद्धिं प्राप्तवन्तं विष्णुं परिणेतुं लक्ष्मीदेवी आकाशराजस्य गृहे पद्मावतीदेवी नाम्ना अवतारं प्राप्तवती। पद्मावती सौन्दर्यस्य राशिः एव आसीत्।






एकदा वेङ्कटेश्वरः अरण्येषु सञ्चरन् पद्मावतीं दृष्टवान्। परस्परदर्शनेन तयोः अनुरागः उत्पन्नः। वेङ्कटेश्वरः-पद्मावत्योः विवाहः सवैभवं सम्पन्नः। तिरुमलस्य पादतले स्थिते आलये पद्मावती जनैः पूज्यमाना स्थियता।

अस्माकं देशस्य सुप्रसिद्धदेवालयेषु अन्यतमः अस्ति तिरुपतिदेवालयः। एतस्य पुनर्निर्माणे चतुर्भिः राजभिः विशेषतया परिश्रमः कृतः। अतः देवालयस्य सुविशालं प्राङ्गणं अस्ति। मन्दिरशिखरं च सुवर्णफलकैः आवृतम् अस्ति।





प्रतिदिनं देशस्य विविधकोणेभ्यः समागताः भक्ताः देवाय धनकनकादिकं समर्पयन्ति। एवम् आगतेन धनेन अनेकाः विद्यासंस्थाः आरोग्यकेन्द्राणि च प्रचलन्ति।

'सीतारामलक्ष्मणाः अस्मिन् दिव्यस्थले वासं कृतवन्तः' इति पुराणेषु उल्लेखः अस्ति। तेषां वासस्थानं 'स्वामितीर्थ' नाम्ना प्रसिद्धम् अस्ति। विष्णुः प्रथमं अस्मिन् पर्वतशिखरे यत्र पादौ स्थापितवान् तत्र इदानीं विष्णुपादचिह्नाङ्कितं शिलाफलकं दृश्यते।






अस्मिन् देवालये स्थितः विग्रहः मन्दहासं प्रकटयति इव अतीव मनमोहकः अस्ति। विग्रहः मणिमाणिक्यैः अमूल्यैः सुवर्णाभरणैः च अलङ्कृतः दृश्यते। सप्ताचलाधीशस्य वेङ्कटेशस्य दर्शनं भक्तिमुक्तिदायकम् इति भक्तानां विश्वासः।



# अदृष्टदेवता

आफ्रिकादेशे पूर्वं कश्चन धीवरः आसीत्। सः प्रतिदिनं कञ्चित् विशालं सरोवरं गच्छति, मीनान् गृह्णाति च।

धीवरः मीनग्रहणार्थं विशालानां कण्डोलानाम् उपयोगं करोति। कण्डोलान् स्वीकृत्य उडुपसाहाय्येन गत्वा यत्र सरोवरः न तथा गभीरः तत्र कण्डोलान् रज्जुसाहाय्येन जले मज्जयति। रज्जोः अपरपार्श्वे लघु-काष्ठखण्डाः भवन्ति इत्यतः सः कण्डोलस्थलं सुलभतया जानाति। प्रत्यागमनसमये कण्डोलान् उन्नीय तत्रस्थान् मीनान् सङ्गृह्णाति सः। एषः तस्य दैनन्दिनः क्रमः।

एकदा सः सरोवरतलात् कण्डोलान् उन्नीतवान्। कण्डोलद्वयं रिक्तम्! एकः अपि मीनः तत्र न दृष्टः। तृतीये कण्डोले कश्चन लघुकर्कटकः आसीत्। चतुर्थम् उन्नेतुं यदा प्रयत्नः कृतः तदा धीवरेण भारः अनुभूतः। "अहो! भाग्यम्! मम दारिद्र्यं दूरङ्गतम् इव" इति वदन् धीवरः महता श्रमेण कण्डोलम् उन्नीतवान्। उडुपे स्थापितवान् च। तत्र तेन काचित् कृशकाया वृद्धा दृष्टा।

निराशः धीवरः तां वृद्धां पुनः सरोवरे पातयितुम् उद्युक्तः। तदा सा वृद्धा कम्पमानेन स्वरेण - "भोः! मां पुनः जले न पातयतु। आत्मना सह माम् अपि गृहं नयतु। एतेन भवतः न कोऽपि हानिः, प्रत्युत विशेषलाभः एव" इति उक्तवती।

तदा धीवरः अनादरेण उक्तवान् - "भवतीं मम गृहं नयामि वा? अहम् एव निराधारः। एतन्मध्ये भवतीम् अपि नीत्वा किं वा करोमि?" इति।

वृद्धा तस्य पादयोः पतन्ती पुनः पुनः आश्रयं प्रार्थितवती। अनन्यगतिकः धीवरः तां स्वगृहं नीतवान्। स्वकीये आहारे एव कञ्चन भागं तस्यै दत्तवान्। आहारस्वीकरणानन्तरं पृष्टवान् च - "अये वृद्धपिशाचे! मम कोऽपि विशेषलाभः भविष्यति इति उक्तवती किल? कः सः विशेषलाभः? वदतु। श्रवणेन वा

"अफ्रिकादेशस्य जानपदकथा"



सन्तोषम् अनुभवामि" इति।

"श्वः सायङ्कालतः पूर्वं भवान् विशालस्य गोवृन्दस्य यजमानः भविष्यति। तदर्थं सुविशालं गोष्ठम् एकं कथञ्चित् सज्जीकरोतु" इति उक्तवती वृद्धा।

धीवरः अत्र अविश्वासं प्रकटयन् बहुविधप्रश्नान् पृष्टवान्। वृद्धा तु किमपि उत्तरम् न उक्तवती। 'मया यावत् उक्तं तावत् करोतु' इति अधिकारवाण्या सूचितवती च।

धीवरः अनिच्छन् इव गोष्ठनिर्माणकार्यम् आरब्धवान्। कण्टकसस्यैः वृतिं निर्माय आरात्रि कार्यं कुर्वन् गोष्ठं निर्मितवान्।

अनन्तरदिने सूर्यास्तसमये सरोवरदिक्तः धेनूनां ध्वनिः श्रुतः। "अम्ब! अम्ब!" इति वदन्त्यः धेनवः धीवरेण निर्मितं गोष्ठं स्वयं प्रविष्टवत्यः। प्रथमं कश्चन महावृषभः गोष्ठं प्राविशत्। तम् अनुसरन्त्यः इतराः अपि गावः गोष्ठं प्रविश्य पूर्वाभ्यस्ताः इव स्वस्वस्थाने शयनं कृतवत्यः।

तद्दिनतः धीवरस्य जीवने व्यवहारे च महत् परिवर्तनं जातम्। सः इदानीं न निर्धनः, अपि तु महाधनिकः।

सामान्यैः सह धीवरस्य व्यवहारः एव नास्ति। दरिद्रान् जनान् तु सः कटाक्षेण अपि न पश्यति। नृत्यं, सङ्गीतं, नाटकं, भोजनकूटः - इत्यादिषु सदा सः निरतः भवति। मद्यपानस्यापि सीमा नास्ति।

बान्धवाः सर्वे धीवरस्य स्वभावं सम्यक् जानन्ति एव। अतः तेषु कोऽपि धीवरम् उपदेष्टुं किं, तस्य सहवासम् अपि न इच्छति।

क्षीरविक्रयणेन सः यथेष्टं धनं सम्पादितवान्। गृहपार्श्वे स्थितां सुविशालां कृषिभूमिं क्रीतवान्। धनिककुलोत्पन्नां काञ्चित् सुन्दरीं परिणीतवान् च।

धीवरः इदानीं महाधनिकेषु अन्यतमः। सर्वदा दर्पेण व्यवहरति सः। कश्चित् तदीयं मार्गदर्शनं पृच्छति चेत् एषः वदति - "इदानीं मम समयावकाशः नास्ति भोः। किं मार्गदर्शनम् एव मम कार्यं वा? रिक्तहस्तेन आगताय अहं मार्गदर्शनं न करोमि अपि" इति।

एवम् एव दिनानि अतीतानि। एकदा एषः

धीवरः विवाहभोजनार्थं पाश्र्वग्रामं गतवान्। तत्र आकण्ठं भुक्त्वा यथेष्टं मदिरां पीतवान्। प्रत्यागमनसमये मध्यरात्रम् अतीतम् आसीत्। धीवरः इतस्ततः वलन् कथञ्चित् गृहं प्रत्यागतवान्। गृहस्य द्वारं पिहितम् आसीत्। सर्वे गाढनिद्रायां मग्नाः आसन्।

"अये! द्वारम् उद्घाटयन्तु। अहं भूस्वामी आगतः अस्मि" इति उच्चैः आहूतवान् धीवरः। कस्य अपि जागरणं न जातम्। कुपितः सः पादेन द्वारं ताडयन् - "अये वृद्धे! किं मृता वा भवती? उपकारस्मरणं नास्ति? मरणात् भवतीं रक्षितवान् अहम्। महाधनिकं माम् उपक्षन्ते वा भवन्तः?" इति असम्बद्धम् आक्रोशनं कृतवान्।

तावति काले वृद्धा उत्थाय आगत्य द्वारम् उद्घाटितवती। द्वारे स्थिता सा धीवरं दृष्ट्वा उक्तवती - "मां वृथा निन्दितवान् भवान्। मया एव उज्जीवितः खलु भवान्? कृतम् उपकारं ये विस्मरन्ति, ये च व्यवहारं न जानन्ति तेषा समीपे अहं न स्थास्यामि। श्वः एव इतः गमिष्यामि" इति।

"अहो! गमिष्यति वा? गच्छतु, इदानीम् एव गच्छतु। पीडा अपगता इति निश्चिन्तः भवामि" इति अट्टहासपूर्वकम् उक्तवान् धीवरः।

अनन्तरदिने प्रातः वृद्धा उत्थितवती। यथापूर्वं गृहकार्याणि कृतवती। पात्राणि प्रक्षाल्य गृहस्य सम्मार्जनं कृतबती। स्वकीयानि प्राचीनवस्त्राणि स्वीकृत्य गृहात् निर्गत्य गोष्ठस्य द्वारम् उद्घाटितवती। सरोवरदिशम् अनुसृतवती च।

गावः वृद्धाम् अनुसृतवत्यः। वृद्धा सरोवरे अदृश्या अभवत्। गावः अपि सरोवरं प्रविश्य अदृश्याः अभवन्।

धीवरः पुनः अपि पूर्वतनस्थितिं प्राप्तवान्। मीनान् गृहणन् सः इदानीं कष्टेन जीवनं यापयति। स्वयं गृहम् आगतां अदृष्टदेवतां सः अविवेकेन प्रतिप्रेषितवान् आसीत्। 'विवेकभ्रष्टानां भवति विनिपातः शतमुखः" इति सूक्तिः सत्यं किल?



# प्रतिभा

ज्ञानानन्दः उत्तरदेशस्य यात्रार्थं प्रस्थितः कश्चन संन्यासी विजयानन्दः दक्षिणप्रान्ते प्रवासार्थम् उद्युक्तः अपरः संन्यासी। तौ कदाचित् परस्परं मिलितवन्तौ।

मेलनसन्दर्भे तौ स्वकीयं प्रवासानुभवं परस्परं निवेदितवन्तौ।

सम्भाषणमध्ये ज्ञानानन्दः उक्तवान् - "सर्वेषु अपि या काचित् प्रतिभा भवति एव" इति।

"सर्वेषु अपि काचित् प्रतिभा भवति एव? एतत् सर्वथा विश्वासार्हं न" इति उक्तवान् विजयानन्दः।

किञ्चित्कालं यावत् तयोः मध्ये एतद्विषये वादविवादः सम्पन्नः। अन्ते विजयानन्दः पृष्ठवान् - "भवति का प्रतिभा अस्ति। प्रथमं तत् वदतु" इति।

"पुरतः स्थितस्य प्रतिभां ज्ञातुं शक्नोमि इत्येव मम प्रतिभावैशिष्ट्यम्" इति उक्तवान् ज्ञानानन्दः।

"एवं वा? तर्हि मयि का वा प्रतिभा स्यात्?" इति पुनः पृष्टवान् विजयानन्दः।

पुरतः स्थितस्य प्रतिभां भवान् ज्ञातुं न शक्नोति इत्येव भवतः प्रतिभावैशिष्ट्यम्" इति उक्तवान् ज्ञानानन्दः।

विजयानन्दः लज्जया शिरः अवनमय्य स्थितवान्





# शिवलीला

मृकण्डुः भृगुवंशीयः महर्षिः। तस्य पत्नी मरुद्वती। बहुकालपर्यन्तं तयोः सन्तानप्राप्तिः न अभवत्। तदर्थं तौ व्रतपूजादिकं कृतवन्तौ। अनेकपुण्यक्षेत्रेषु तपः आचरितवन्तौ। एवं-क्रमेण एकदा केदारक्षेत्रं गत्वा तत्र केदारेश्वरं सेवमानौ तत्रैव उषितवन्तौ।

एवं हि सति एकस्मिन् दिने तौ मुनिदम्पती केदारेश्वरं पूजयित्वा ध्यानमग्नौ जातौ। तदा "इदानीं भवतोः सेवया अलम्। स्वीयम् आश्रमं गच्छताम्। भवतोः पुत्रभाग्यं सिद्ध्यति" इति काचित् अशरीरवाणी श्रुता।

ध्यानसमये तां दिव्यवाणीं श्रुत्वा मृकण्डु-दम्पती महता सन्तोषेण स्वीयं गृहं प्रत्यागत-वन्तौ। गच्छता कालेन मरुद्वती गर्भिणी भूत्वा एकं पुत्रं प्रसूतवती।

पुत्रस्य जननसमये आकाशतः "एषः बालः अल्पायुः। तस्य आयुः केवलं द्वादश-वर्षपरिमितम्" इति अशरीरवाणी श्रुता। तां वाणीं श्रुत्वा तौ मुनिदम्पती आनन्दशिखरतः साक्षात् दुःखसागरे पतितवन्तौ। अत्यन्त-दुःखितौ तौ अन्ते "एतत् सर्वं शिवलीला-फलम्। सः एव ददाति। पुनः सः एव एवं वदति! वयं किं वा कर्तुं शक्नुमः?" इति चिन्तयन्तौ यथाकथञ्चित् पुत्रस्य बाललीलां पश्यन्तौ समाधानं प्राप्तवन्तौ।

मृकण्डुमहर्षिः यथाविधि पुत्रस्य जात-कर्माणि समाप्य मार्कण्डेयः इति नामकरणं कृतवान्।

मार्कण्डेयः प्रतिदिनं प्रवर्धमानः, उप-



नयनसंस्कारानन्तरं गुरुकुलं गत्वा, विद्याभ्यासं कुर्वन् एकादशवर्षीयः भूत्वा जननीजनकयोः समीपम् आगतवान्। ब्रह्मतेजसा शोभमानं प्रियपुत्रं दृष्ट्वा तयोः हृदयकम्पनम् आरब्धम्। इदानीं एकं वर्षम् एव अवशिष्टम् अस्ति!

विद्यासम्पन्नं सुकुमारं दृष्ट्वा मरुद्वती सन्तोषं नैव प्राप्तवती। प्रत्युत तं समालिङ्ग्य अश्रुधारां स्रावितवती। तां दृष्ट्वा रोदनस्य कारणं किम् इति मार्कण्डेयस्य प्रश्नस्य उत्तरम् अपि तस्याः रोदनम् एव। अन्ते मृकण्डुः एव यथाकथञ्चित् बहुकष्टेन मार्कण्डेयस्य अल्पायुषः विचारं तथा तस्य पूर्ववृत्तान्तं सर्वं कथितवान्।

तं विचारं श्रुत्वा मार्कण्डेयः दुःखितः न अभवत्। दृढचित्तः सः कर्तव्यकर्म किमिति किञ्चित् आलोच्य "चिन्ता मास्तु। भवतोः आशीः अस्तु। इदानीं तपःकृते अहं गच्छामि। शिवानुग्रहेण मृत्युं जित्वा, चिरायुः भूत्वा एव प्रत्यागमिष्यामि" इति उक्त्वा मातापितरौ नमस्कृतवान्।

मृकण्डुः मरुद्वती च कुमारम् आलिङ्ग्य 'चिरञ्जीवी भवतु' इति आशीर्वचनम् उक्तवन्तौ। तस्मिन् एव समये तत्र नारदः समागतः। मृकण्डुः नारदं सत्कृत्य, कुमारस्य सर्वं वृत्तान्तं निवेदितवान्।

नारदः मार्कण्डेयस्य दृढसङ्कल्पं दृष्ट्वा सम्प्रीतः भूत्वा "वत्स, मार्कण्डेय! भवान् साक्षात् गौतमीतीरं गच्छतु। तत्र एकाग्रचित्तेन पञ्चाक्षरीमन्त्रं जपन् शिवार्चनं करोतु। भवतः इष्टं सिद्ध्यति" इति आशीर्वचनसहितम् उक्त्वा निर्गतवान्।

मार्कण्डेयः गौतमीतीरं गत्वा, तत्र सैकतलिङ्गस्य प्रतिष्ठापनं कृत्वा "भोः! चन्द्रशेखर! भवान् एव रक्षकः। भवत्पादाश्रितं मां यमः किं वा कर्तुं शक्नुयात्? भवन्तं शरणं आगतः अस्मि" इति वदन् शिवध्यानपरः भूत्वा तपः कर्तुम् आरब्धवान्।

तदा त्रिलोकसञ्चारी नारदः यमस्य समीपं गत्वा "पश्यतु भोः यमराज! मृत्युं निवारयितुं मार्कण्डेयनामकः मुनिबालः तपः आचरन् अस्ति। लोके इदानीं भवतः बलस्य परीक्षा-



कालः सन्निहितः" इति विशेषवार्ता वदन् इव उक्त्वा ततः निर्गतवान्।

मार्कण्डेयस्य आयुषः अन्तिमदिनं सन्निहितम्। यमः मार्कण्डेयस्य प्राणान् आनेतुं स्वीयदूतान् प्रेषितवान्। किन्तु ते यमकिङ्कराः मार्कण्डेयस्य समीपं गन्तुम् अपि असमर्थाः भूत्वा, प्रतिनिवृत्य धावन्तः गत्वा यमस्य पुरतः अवनतमस्तकाः स्थितवन्तः। एतत् दृष्ट्वा स्वयं यमः एव दण्डपाशादिकं धृत्वा कृष्णवर्णीयं महिषम् आरुह्य मार्कण्डेयस्य समीपं गतवान्। यदा सः तत्र आगतः, तदा मार्कण्डेयः शिवलिङ्गस्य उपरि मस्तकं संस्थाप्य, द्वाभ्याम् अपि हस्ताभ्यां शिवलिङ्गं दृढम् आलिङ्ग्य ध्यानपरः आसीत्। तदा यमः स्वीयं कालपाशं मार्कण्डेयस्य कण्ठं प्रति क्षिप्तवान्। तेन पाशेन शिवलिङ्गं मार्कण्डेयस्य कण्ठः च युगपत् बद्धौ।

उत्तरक्षणे शिवलिङ्गमध्यात् शिवः आविर्भूय, प्रलयकालीनरुद्ररूपं धृत्वा, तृतीयनेत्रम् उन्मील्य, यमम् उद्दिश्य स्वीयं त्रिशूलम् उन्नीतवान्। तदा यमः भयेन कम्पमानः, अञ्जलिबद्धः भूत्वा "भोः हर! महादेव! रक्षतु! रक्षतु" इति याचमानः अधः पतितवान्।

शिवः मार्कण्डेयस्य शिरसः उपरि अभयहस्तं संस्थाप्य "वत्स! भवतः मरणम् एव नास्ति। भवान् चिरञ्जीवी भविष्यति" इति वरेण अनुगृहीतवान्।

शिवस्य क्रोधं दृष्ट्वा भीताः सर्वाः देवताः तत्र समागत्य, शिवं नमस्कृत्य 'यमं विना सर्वे लोकाः अव्यवस्थिताः भवन्ति। अतः यमं क्षाम्यतु' इति प्रार्थितवत्यः। शिवस्य अनुग्रहेण यमः पुनर्जन्म प्राप्तवान् इव उत्थाय स्वीयं लोकं गतवान्।

तस्मिन् दिने स्वीयपुत्रस्य अन्वेषणं कुर्वन्तौ मृकण्डुः मरुद्वती च तत्र आगत्य, शिवानुग्रहेण नूतनशोभायुक्तं स्वीयं पुत्रं दृष्ट्वा, शिवलीलां श्लाघमानौ चिरञ्जीविना पुत्रेण सह स्वनिवासं गतवन्तौ।

इत्थं यदा मार्कण्डेयः चिरायुः अभवत्, तदा अन्येषां आयुः - परिमाणस्य गणनार्थं विशेषज्ञानार्थं च अनेके तस्य समीपम्



आगच्छन्ति स्म।

इन्द्रद्युम्ननामकः महाराजः स्वजीवनकाले महतीं कीर्तिं सम्पाद्य, बहुकालं यावत् स्वर्गसुखानि अनुभूतवान्। यदा तस्य यशः क्षीणं जातं, तदा स्वर्गवासिनः "इदानीं भूलोके भवतः नामसङ्कीर्तनं कोऽपि न करोति। अतः इतःपर भवतः स्वर्गवासस्य अवकाशः नास्ति। भूलोकं प्रतिगच्छतु" इति उक्तवन्तः।

इन्द्रद्युम्नाः भूलोकं प्रत्यागत्य, स्वनामधेयं कः स्मरति इति अन्वेषणं कुर्वन्, मार्कण्डेयस्य समीपम् आगतवान्।

"अहं भवन्तं न जानामि। मदपेक्षया ज्येष्ठः प्रावारकर्णनामकः उलूकः अस्ति। तं पृच्छतु" इति उक्तवान् मार्कण्डेयः। द्वौ अपि प्रावारकर्णस्य समीपं गतवन्तौ।

"अहम् अपि भवन्तं न जानामि। किन्तु मत्तः अपि वृद्धतरः नालीकजङ्घनामकः बकः अस्ति। तं पृच्छामः" इति उक्त्वा प्रावारकर्णः अपि ताभ्यां सह प्रस्थितवान्।

नालीकजङ्घस्य अपि इन्द्रद्युम्नस्य परिचयः न आसीत्। सः तैः सह स्वापेक्षया वृद्धतरस्य अकूपारनामकस्य कूर्मस्य समीपं गतवान्।

अकूपारः इन्द्रद्युम्नं दृष्ट्वा "अहो! इन्द्रद्युम्न! अहं सर्वदा भवतः स्मरणं करोमि। एषः तटाकः भवत्कारणेन एव जातः। भवान् तु अनेकयागान् कृतवान् खलु। तेषु यागेषु गोदानसमये गवां पादाघातैः स्वयं जातः एषः तटाकः" इति उक्तवान्।

इन्द्रद्युम्नस्य कीर्तिः इदानीम् अपि भूलोके अवशिष्टा अस्ति इति ज्ञात्वा देवदूताः पुनः तं स्वर्गं नीतवान्तः।

भीमावतीनगरे शिवभक्तः कश्चित् सोमयाजी वसति स्म। तस्य सिद्धरामनामकः एकः पुत्रः जातः। यदा सिद्धरामः सप्तवर्षीयः जातः, तदा सोमयाजी दिवङ्गतः। पितृविहीनं बालं माता एव महत्या प्रीत्या पालितवती।

एवं हि सति दीपावली सन्निहिता। ततः पूर्वं एकदा सिद्धरामः स्नेहितैः सह समिधादिकम् आनेतुम् अरण्यं गतवान्। तत्र सर्वे बालाः कस्यचित् वटवृक्षस्य अधोभागे उपविश्य परस्परं जल्पन्ति स्म।

"दीपावलीकृते अस्माकम् अग्रजा आवुत्तः च आहूतौ। दीपावलीदिने अस्माकं गृहे अपूपादिभक्ष्याणि कुर्वन्ति। अग्रजायै आवृत्ताय च नूतनवस्त्राणि यच्छन्ति। वयम् अपि खादामः" इति बालाः महता उत्साहेन परस्परं वदन्ति स्म।

तेषां वचनानि श्रुत्वा सिद्धरामः "वयम् अपि दीपावलीकृते अग्रजां आवुत्तं च आह्वयामः। अस्माकं गृहे अपि पायसं करोति मम माता। अग्रजायै आवुत्ताय च नूतन-वस्त्राणि दास्यामः" इति उत्साहेन उक्तवान्।

तस्य वचनानि श्रुत्वा सर्वं बालाः उपहासं कुर्वन्तः - "भवतः अग्रजा एव नास्ति। आवुत्तः कुतः आगच्छेत्? अस्माकं पुरतः असत्यं जल्पति वा? अस्तु, तर्हि वदतु। का भवतः अग्रजा? तस्याः नाम किम्? तस्याः गृहं कुत्र अस्ति? सा किम् कार्यं करोति? किं पठितवती? तस्याः कति पुत्राः सन्ति? तेषां नामानि कानि? भवान् सर्वं जानाति वा?" इति प्रश्नमालाम् एव सिद्धरामस्य उपरि क्षिप्तवन्तः।

तेषां प्रश्नानां समाधानं वक्तुम् असमर्थः सिद्धरामः अवमानेन रोदनं कुर्वन् गृहम् आगतवान्।

रुदन्तं पुत्रं दृष्ट्वा माता सम्भ्रमेण तं दृढम् आलिङ्ग्य "वत्स, किं जातम्? पतितवान् वा? अथवा कोऽपि ताडितवान् वा? किमर्थं रोदनं करोति?" इति पृष्टवती।

सिद्धरामः स्नेहितानां निन्दावाक्यानि मातरं कथितवान्।

तस्य वचनं श्रुत्वा माता "ते किमपि वदन्तु नाम। शृणोतु, अहं वदामि। भवतः अग्रजायाः नाम भ्रमराम्बा। भवतः आवुत्तः मल्लि-कार्जुनः। तयोः गृहं श्रीशैलपर्वतस्य उपरि अस्ति। तयोः अष्टैश्वर्याणि अपि सन्ति। गणपतिः कुमारस्वामी च तयोः पुत्रौ। भवतः आवुत्तः सर्वेश्वरः। समस्तलोकः तस्य इच्छाम् अनुसृत्य चलति। भवदीयः यः आवुत्तः अस्ति तस्य समानः आवुत्तः लोके कस्य अपि नास्ति। ज्ञातं वा? "इति उक्तवती।





# उच्चनीचभावः

'अस्मिन् प्रपञ्चे उच्चः कः? नीचश्च कः?' इति विषये कदाचित् कस्यचित् वेदान्तिनः कस्यचित् कृषिकस्य च मध्ये वादः उत्पन्नः। सामान्यवार्तालापः एवं वादरूपेण परिणतः आसीत्।

"पश्यतु भोः! भवान् तु श्रमशीलः कृषिकः। जलसेचनं, क्षेत्रकर्षणम्, बीजावापः, सस्यारोपणं, कुतृणानाम् अपसारणम् इत्यादीनि भवतः कार्याणि। भवतः बुद्धिः सर्वथा क्रियाशून्या। पशुपक्षिणः जीवन्ति, भवादृशाः अपि जीवन्ति! जीवने न किमपि वैशिष्ट्यम्' इति उक्तवान् वेदान्ती।

तदा कृषिकः उक्तवान् - "वेदान्ति-महोदय! मानवेषु वयम् एव श्रेष्ठाः इति भवान् न जानाति। वेदान्तः न श्रुतः चेत् कोऽपि मृतः न भवति। किन्तु अस्माभिः प्रवर्ध्यमानानि धान्यानि यदि न स्युः तर्हि लोके कः वा जीवेत? वयम् एव लोके जीवभूताः" इति।

वेदान्ती चिन्तनमग्नः सन् मौनम् उपविष्टवान्। तदा कृषिकः पुनः उक्तवान् - "श्रीमन्! अत्र चिन्तनीयं किम् अस्ति। विषयस्पस्टतार्थं काञ्चित् कथां वदामि। शृणोतु। पूर्वं कदाचित् शिला-पङ्कयोः मध्ये वादविवादः उत्पन्नः। 'मां पश्यतु, अहं कथं स्वच्छा दृढा सुन्दरी च अस्मि' इति गर्वेण उक्तवती शिला। एतावदेव न, पङ्कम् उपहसन्ती निन्दितवती च - "भवतः स्पर्शनं किं, दर्शनम् एव जुगुप्साजनकम्। स्पृष्टं चेतु शरीरं मलिनं भवेत् एव। पुनः जलेन क्षालनीयम्" इति।

गर्विण्याः शिलायाः वचनं श्रुत्वा पङ्कः सावधानेन एव अवदत् - "अये! मम रूपं जुगुप्साजनकं स्यात्। किन्तु मानवानां जीवनाधारभूतेषु धान्येषु सारं कः पूरयति?

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

सस्यानि कः पोषयति? सर्वं मत्कारणतः एव सिध्यति। भवती जीवने किं साधयति? वदतु'' इति।

कृषिकेण उक्तां कथां श्रुत्वा वेदान्ती उक्तवान् - ''भवतः उदाहरणं युक्तम् एव। पङ्कः धान्येषु जीवं पूरयति इति तु सत्यम्। किन्तु शिलायाः उपयोगः किं नास्ति एव? भवननिर्माणे मन्दिरादीनां निर्माणे च शिला एव अनिवार्या किल? एवं सर्वाणि वस्तूनि उपकारीणि एवं'' इति।

''सर्वाणि वस्तूनि उपकारकाणि एव इति एतावत् वा अङ्गीकृतं किल? अहम् अन्याम् अपि कथां श्रावयितुम् इच्छामि। तदनन्तरं भवान् स्वाभिप्रायं प्रकटयतु'' इति उक्त्वा कृषिकः अपरां कथाम् आरब्धवान्–

''कस्मिंश्चित् अरण्ये कश्चन वटवृक्षः सालवृक्षः च आस्ताम्। एकदा वटवृक्षः सालवृक्षम् अवदत् - 'भोः अहं छायादानेन सहस्रशः जीविनाम् आश्रयदाता अस्मि। भवतः पत्राणि तु विशालाकारकाणि। किन्त कोऽपि भवन्तम् आश्रित्य न तिष्ठति' इति।

तदा सालवृक्षः अवदत् - 'मित्र! किमर्थं वृथा गर्वः? छायार्थं विश्रान्त्यर्थं च भवतः उपयोगं प्राप्नुवन्ति जनाः। किन्तु शाश्वतिकानां गृहादीनां निर्माणार्थं मम एव समीपम् आगच्छन्ति। एवं च भवतः उपयोगः तात्कालिकः, मम तु शाश्वतिकः' इति।

कृषिकस्य वचनं श्रुत्वा वेदान्ती हर्षं प्रकटयन् आदरेण उक्तवान् - ''भवदुक्तं सत्यम्। भवान् शरीरार्थं छायादाता वटवृक्षः इव।

अहं तु मनसः शान्तिदाता सालवृक्षः इव। धान्यादिषु सत्त्वाधायकः पङ्कः इव भवान्। रक्षिका शिला इव अहम्। अतः आवयोः मध्ये उच्चनीचभावः नास्ति एव। लोके उभयोः अपि आवश्यकता अस्ति'' इति।





# चोरस्य अन्वेषणम्

कदाचित् रत्नगुप्तनामकस्य गृहे चौर्यम् अभवत्। गृहे स्थितानि दशसहस्रं सुवर्णनाणकानि अदृश्यतां गतानि। यस्मिन् प्रकोष्ठे धनपेटिका आसीत् तस्य पार्श्वे स्थिते प्रकोष्ठे चत्वारः सेवकाः शयनं कुर्वन्ति स्म। 'चौर्ये एतेषां हस्तकौशलं स्यात् एव' इति चिन्तितवान् रत्नगुप्तः।

रत्नगुप्तस्य स्वभावः अतीव मृदुः। सः कमपि दण्डयितुं किं, कठोरैः शब्दैः निन्दितुम् अपि न शक्नोति।

तस्य आत्मीयस्नेहितः सोमचन्द्रः। एषः तु अतीव बुद्धिमान् व्यवहारचतुरः च। तदा तदा रत्नगुप्तस्य साहाय्यं करोति अपि। रत्नगुप्तः एतस्मै सोमचन्द्राय प्रवृत्तं सर्वं निवेद्य उक्तवान् - "भोः! कस्यापि खेदः यथा न स्यात् तथा एतेषु चतुर्षु चोरः कः इति निर्णेतव्यम्। तत् कथम्?" इति।

"तद्विषये अहं व्यवस्थां करोमि" इति उक्त्वा सोमचन्द्रः तान् सेवकान् एकं प्रकोष्ठं नीतवान्। उक्तवान् च - "भोः पश्यन्तु। भवन्तः चत्वारः अपि धनपेटिका यत्र स्थापिता तस्य प्रकोष्ठस्य पार्श्वे एव शयनं कुर्वन्ति। चौर्यं तु कथञ्चित् प्रवृत्तम्। रत्नगुप्तः सज्जनः इति कारणतः भवन्तः कारागारं न प्रेषिताः। यत् प्रवृत्तं तत् त्यजाम। अद्य सायङ्कालतः पूर्वं चोरितं धनं स्वस्थानम् आगच्छेत्। अन्यथा भवन्तः महासङ्कटे पतिताः भवन्ति। अतः जागरूकाः भवन्तु। एतदपि स्मरणे भवतु यत् यः स्वयं स्वकीयम् अपराधम् अङ्गीकरोति तम् उदारतया क्षाम्यति रत्नगुप्तः"इति।

सायङ्कालः अतीतः। धनं स्वस्थानं न आगतम्।

अनन्तरदिने सोमचन्द्रः एकस्मिन् प्रकोष्ठे उपविश्य एतान् सेवकान् एकैकशः आहूतवान्। प्रथमं धर्मवीरः प्रकोष्ठं प्रविष्ट-



बहुधा विलापं कृतवान्।

सोमचन्द्रः धर्मवीरं प्रेषितवान्। द्वितीयं सेवकं रङ्गम् अन्तः आहूतवान्। धर्मवीरं यानि वचनानि उक्तवान् तानि एव एतम् अपि उक्तवान्।

तदा रङ्गः भीत्या कम्पमानः - "श्रीमन्! भवता एव रक्षणीयः अयं जनः। वस्तुतः अहं चौर्यविषये किमपि न जानामि" इति वदन् सोमचन्द्रस्य पादयोः पतितवान्।

"यदि भवान् वस्तुतः चौर्यं न कृतवान् तर्हि भीतिः किमर्थम्? भवतः चौर्यं प्रमाणीकर्तुं मम समीपे स्थितान् आधारान् श्वः कथयिष्यामि। इदानीं गच्छतु भवान्" इति उक्त्वा तं प्रेषयित्वा तृतीयं रामनाथम् अन्तः आहूतवान् सोमचन्द्रः।

वान्।

सोमचन्द्रः धर्मवीरम् उक्तवान् -"अये! भवान् एव चौर्यं कृतवान्। एतद्विषये मम समीपे यथेष्ठं प्रमाणानि सन्ति। यदि भवान् प्रामाणिकतया चौर्यम् अङ्गीकृत्य चोरितं धनं प्रत्यर्पयति तर्हि भवन्तं क्षाम्यामि अहम्" इति।

धर्मवीरः आघातम् अनुभूतवान् इव स्तब्धः अभवत्। क्षणकालानन्तरं सः - "दशवर्षेश्यः अहम् अत्र कार्यं कुर्वन् अस्मि। अद्यावधि एतादृशः अपवादः मया न श्रुतः। इदानीं नु कृतघ्नतायाः आरोपः श्रुतः। इतःपरं मम जीवितेन किं प्रयोजनम्? एतत्क्षणे एव प्राणाः यदि निर्गच्छेयुः तर्हि वरं भवेत्" इति

यदा सोमचन्द्रः रामनाथस्य उपरि चौर्यम् आरोपितवान् तदा क्रुद्धः रामनाथः - "श्रीमन्! युक्तायुक्ततां विचार्य वदतु भवान्। भवान् तु धनिकः। अहं सेवकः स्याम्। ममपि स्वाभिमानम् अस्ति। मिथ्यारोपं सोढुम् अहं कदापि न सिद्धः" इति गर्जितवान्।

"किं गर्जनेन मां भापयितुम् इच्छति? भवादृशान् बहून् दृष्टवान् अहं मम जीवने। पार्श्वप्रकोष्ठे एव चौर्यं जातम्। यदि भवान् चोरः न स्यात् तर्हि भवान् तत् कथं न ज्ञातवान्? रक्षणार्थम् इत्येव किल भवतः शयनव्यवस्था तत्र कृता? गच्छतु इतः। श्वः पश्यामि भवतः विचारम्" इति उक्त्वा तं प्रेषितवान् सोमचन्द्रः।



अन्ते आगतः चन्द्रनाथः अपि चौर्यस्य आरोपं श्रुत्वा रामनाथः इव क्रोधेन गर्जितवान्। तदा सोमचन्द्रः पृष्ठवान् "यदा चोराः सर्वं चोरयन्तः आसन् तदा भवान् गाढनिद्रायाम् आसीत्। एतत् अपि अपराधाय किल?" इति।

चन्द्रनाथः कोपेन एव - "श्रीमन्! वयं गृहकार्यार्थं नियुक्ताः, न तु गृहरक्षणार्थम्। आदिनं परिश्रमेण कार्यं कुर्मः। अतः रात्रौ गाढनिद्रा सहजा। यदि अस्माभिः रक्षणाकार्यं करणीयं तर्हि तदर्थम् एव अस्मान् नियोजयन्तु। तदा वयं दिने विश्रान्तिं स्वीकृत्य रात्रौ रक्षणं कुर्मः। तत्सन्दर्भे यदि चौर्यं भवेत् तर्हि वयम् अपराधम् अङ्गीकरिष्यामः" इति।

सोमचन्द्रः तम् अपि प्रषितवान्। ततः साक्षात् रत्नगुप्तस्य समीपं गत्वा- "एतत् चौर्यं चतुर्भिः अपि सम्भूय न कृतम्। धर्मवीरः रामनाथः च सर्वथा निर्दोषिणौ। मम तु सन्देहः रङ्गस्य विषये एव। चन्द्रनाथः अपि साहाय्यं कृतवान् स्यात्। अनयोः गृहशोधनेन वस्तुस्थितिः स्पष्टीभविष्यति" इति उक्तवान्।

रत्नगुप्तः स्वगृहस्य पृष्ठभागे एतेषां सेवकानां कृते गृहाणि निर्माय दत्तवान् आसीत्। तेषां कुटुम्बसदस्याः तत्र सन्ति। एते तु रात्रौ केवलं रत्नगुप्तस्य गृहे शयनं कुर्वन्ति।

बहु अन्वेषणानन्तरम् अपि रङ्गस्य गृहे चन्द्रनाथस्य गृहे वा किमपि न लब्धम्। तदा सोमचन्द्रः रत्नगुप्तम् उक्तवान् - "इदानीं सिद्धं यत् चन्द्रनाथः निर्दोषी इति। रङ्गः एव वास्तविकः अपराधी। सः स्वयं चौर्यं कृतवान् स्यात्। अथवा चोराय साहाय्यम् आचरितवान् स्यात् अपि" इति।

"रङ्गस्य मुखतः सत्यं कथं बहिः आनाययामः" इति पृष्टवान् रत्नगुप्तः।

"सः यथा न जानीयात् तथा तस्य अनुसरणं सदा करणीयम्। एषः एव अवशिष्टः मार्गः" इति उक्तवान् सोमचन्द्रः।



रत्नगुप्तः एतदर्थं योग्यव्यवस्थां कृतवान्। एतदनन्तरं दशमे दिने रङ्गः विपण्यां कौशेयशाटिकां क्रीणानः अस्ति इति वार्ता श्रुता। तत्क्षणे सोमचन्द्रः तत्र गतवान्। अन्वेषणेन रङ्गस्य वस्त्रेषु शतं सुवर्ण-नाणकानि लब्धानि।

सोमचन्द्रः तर्जनस्वरेण पृष्टवान् - "एतावन्ति सुवर्णनाणकानि भवतः समीपे कथम् आगतानि?" इति।

रङ्गः किमपि वक्तुं न शक्नोति। भीत्या सः कम्पमानः अस्ति। सोमचन्द्रः तं रत्न-गुप्तसमीपं नीतवान्।

'यथा सोमचन्द्रेण उक्तं तथा रङ्गः एव चोरः' इति ज्ञात्वा रत्नगुप्तः आश्चर्य-चकितः। अवशिष्टं धनम् आनेतुं सः रङ्गम् आदिष्टवान्।

रङ्गः कम्पमानस्वरेण उक्तवान् - "स्वामिन्! वस्तुतः अहं चौर्यं न कृतवान्" इति।

"तर्हि कः चौर्यं कृतवान्?" इति पृष्टवान् रत्नगुप्तः।

"यदि इदानीम् अहं सत्यं वदामि तर्हि धनगुप्तः मां मारयिष्यति" इति उक्तवान् रङ्गः।

धनगुप्तस्य नामश्रवणेन रत्नगुप्तः क्षण-कालं स्तब्धः। धनगुप्तः तस्य पत्न्याः सहोदरः। गृहे वृथा अटति इति कारणतः तस्य श्वशुरः धनगुप्तम् अत्र प्रेषितवान् आसीत्।

"किं प्रवृत्तम् इति निर्भयेन वदतु। अहं भवतः रक्षणं करोमि" इति उक्तवान् रत्नगुप्तः।

तदा रङ्गः उक्तवान् - "श्रीमन्! वयं यत्र प्रकोष्ठे शयनं कुर्मः तत्पार्श्वप्रकोष्ठे धन-पेटिका अस्ति इति वयं जानीमः। अतः रात्रौ पर्यायक्रमेण अस्मासु कश्चित् जागरूकतया तिष्ठति। अन्ये शयनं कुर्वन्ति। तद्दिने एवं मम पर्यायः यदा आसीत् तदा धनगुप्तः मन्दं तत्र आगतवान्। तस्य हस्ते तीक्ष्णा छुरिका आसीत्। छुरिकां प्रदर्श्य 'कमपि वदति चेत् भवन्तं मारयिष्यामि' इति उक्त्वा कृतक-कुञ्चिकया प्रकोष्ठस्य द्वारम् उद्घाटितवान्।

चोरिते धने मह्यं द्विशतं सुवर्णनाणकानि दत्तवान्। अहं तत् धनं धनगुप्तस्य प्रकोष्ठे एव रहस्यरूपेण स्थापितवान्" इति।

सर्वं श्रुत्वा रत्नगुप्तः धनगुप्तस्य प्रकोष्ठस्य अन्वेषणं कारितवान्। तत्र अष्टशतं सुवर्णनाणकानि लब्धानि। धनगुप्तः सुलभतया एव स्वकीयम् अपराधम् अङ्गीकृतवान्। रत्नगुप्तस्य पत्नी अनुजं सम्यक् तर्जयन्ती तं पितृगृहं प्रेषितवती।

अनन्तरं रत्नगुप्तः सोमचन्द्रम् आहूय पृष्टवान् - "भवतः प्रयत्नेन समस्या सुलभतया परिहृता। रङ्गः एव चोरः, अन्ये निर्दोषिणः इति भवान् कथं वा ज्ञातवान्?" इति।

सोमचन्द्रः मन्द हसन् उक्तवान् - "अत्र मया विशेषपरिश्रमः कोऽपि न कृतः। निर्दोषिणः उपरि दोषारोपणं क्रूरः चेत् सः अत्यन्तं दुःखम् अनुभवति। धर्मवीरस्य उपरि यदा चौर्यारोपः कृतः तदा सः अतीव व्याकुलितः अभवत्। 'एषः चोरः न' इति तेन निश्चितम्। विशेषस्वाभिमानं नास्तीत्यतः धर्मवीरः विरोधं न कृतवान्। रामनाथः तु साक्षात् विरोधं कृतवान्। कर्तव्यच्युतिः यदा आरोपिता तदा मौनं स्थितवान्। चन्द्रनाथः तु चौर्यारोपं श्रुत्वा न केवलं क्रुद्धः अभवत्, अपि तु 'गृहरक्षणम् अस्माकं दायित्वं न' इत्यपि उक्तवान्। एतादृशेषु दोषित्वं निर्दोषित्वम् उभयम् अपि भवितुम् अर्हति। रङ्गः तु चौर्यारोपेण कम्पितः अभवत्। यः द्रोषी सः एव एवं भीतः भवति। अतः अहं निश्चितवान् यत् एषः चौर्यं न कृतवान् चेदपि चौर्यविषये सर्वं जानाति इति। अन्ते वस्तुस्थितिः अपि तथैव आसीत् किल?" इति।

रत्नगुप्तः सोमचन्द्रस्य बुद्धिमत्तां विशेषतया प्रशंसितवान्।

"भवतः साहाय्येन चोरितं धनं पुनः प्राप्तम्। निर्दोषी कोऽपि पीडितः न अभवत्। अपराधी अपि इतःपरं सन्मार्गे गच्छेत् इति मम विश्वासः। भवतः साहाय्यं सर्वदा स्मरिष्यामि" इति उक्तवान् च।



# संसारतरणम्

वृषभेन्द्रः कश्चन वैद्यः। कदाचित् सः मध्यरात्रसमये चिकित्सार्थं पार्श्वग्रामं गतवान्। तत्र अश्रद्धया किमपि औषधं दत्तवान् च। तेन रोगी मृतः अभवत्। कुपिता रोगिणः बान्धवाः वृषभेन्द्रं गृहस्य पृष्ठतः वृक्षे बद्ध्वा - "भवान् कथं दण्डनीयः इति श्वः प्रातः निर्णेष्यामः" इति उक्त्वा अन्तः गत्वा सुप्तवन्तः।

वृषभेन्द्रः महता प्रयासेन कथञ्चित् आत्मानं मोचयित्वा, निरन्तरं धावन् नदीं तीर्त्वा सूर्योदयतः पूर्वं गृहं प्राप्तवान्। तत्समये तदीयः पुत्रः वैद्यग्रन्थस्य पठने तत्परः आसीत्।

वृषभेन्द्रः पुत्रस्य समीपं गत्वा - "पुत्र! वैद्यकीयग्रन्थे एव लीनः न भवतु। ग्रन्थे मज्जनं प्रधानं न। संसारे तरणं प्रधानम्। अतः प्रथमं व्यवहारकौशलं सम्यक् जानातु" इति उपदिष्टवान्।

अनन्तरं वृषभेन्द्रः कांश्चन मासान् यावत् कुत्रापि रहस्यरूपेण निवसन् आसीत्।





# ऋणस्य प्रतिसङ्ग्रहणम्

देवपुरे वीरदासः नाम धनिकः आसीत्। यद्यपि सः कुसीदव्यवहारेण जीवति, तथापि बहुजनप्रियः। ये ऋणम् इच्छन्ति ते तस्य समीपतः धनं स्वीकृत्य समये प्रत्यर्पयन्ति स्म। योग्या वृद्धिः अपि तैः दीयते एव। वीरदासः अपि अन्यायेन धनं सम्पादयितुं न इच्छति। समयानुगणं भागशः ऋणप्रत्यर्पणम् अपि अङ्गीकरोति सः। अतः बहवः विशेषसन्दर्भेषु वीरदासस्य साहाय्येन कार्यं निर्वहन्ति स्म।

देवपुरस्य परश्र्वग्रामे नागभूषणः नाम अपरः धनिकः आसीत्। नागभूषणस्य पित्रार्जिता सम्पत्तिः यथेष्टम् अस्ति। तथापि तस्य धनाशा अधिका। कुसीदव्यवहारेण अधिकवृद्धिं सङ्गृह्णाति स्म सः। नागभूषणतः बहवः ऋणं स्वीकुर्वन्ति। किन्तु प्रत्यर्पणसमये तु बहुधा पीडयन्ति। केचन तु समये वृद्धिम् अपि न यच्छन्ति। प्रतिदिनं नागभूषणम् आटयन्ति।

एतत्कारणतः एव नागभूषणः ऋणस्य प्रतिसङ्ग्रहणार्थम् एव कांश्चन धूर्तान् पालयति स्म। एतदर्थं महान्तं व्ययम् अपि करोति सः। कदाचित् एतेषां धूर्तानां दुराचारः अपि मौनं सोढव्यं भवति स्म तेन।

नागभूषणः वीरदासस्य विषयं जानाति। एकदा सः वीरदासं द्रष्टुं देवपुरम् आगतवान्। स्वागतोपचारानन्तरं सः वीरदासं पृष्टवान् - "महोदय! भवान् कुसीदव्यवहारं करोति किल? दत्तम् ऋणं कथं वा प्रतिप्राप्नोति?" इति।

तदा वीरदासः उक्तवान् - "ऋणस्य प्रतिप्राप्तौ कः क्लेशः? ये मम समीपतः ऋणं स्वीकुर्वन्ति ते एव स्वयम् आगत्य ऋणं प्रत्यर्पयन्ति। अत्र ज्ञातव्यं किम् अस्ति?" इति।



"किन्तु सर्वे सज्जनाः न भवन्ति किल? केचन दुराग्रहशीलाः भवन्ति एव। तेषां हस्ततः कथं वा ऋणं प्रतिस्वीकरोति?" इति पृष्टवान् नागभूषणः।

"जनः स्वभावेन यथाकथम् अपि भवतु नाम। मया सह सः विनयेन एव व्यवहरति। अद्यावधि अहं ऋणस्य प्रतिस्वीकारे विशेष-कष्टं न अनुभूतवान्। यत्र अनुभवः एव नास्ति तद्विषये किं वा वदामि?" इति उक्तवान् वीरदासः।

नागभूषणः क्षणकालं चिन्तयन् मौनं स्थितवान्। अनन्तरं पृष्टवान् च - "एवं तर्हि अहं भवतः सकाशतः द्विशतं रूप्यकाणि ऋणत्वेन स्वीकरिष्यामि। षण्मासाभ्यन्तरे भवता तत् धनम् उपायेन प्रतिस्वीकरणीयम्। यदि भवान् सफलः तर्हि सहस्रं रूप्यकाणां पारितोषिकं दास्यामि। अस्तु वा?" इति।

वीरदासः मन्दहासं प्रकटयन् - "भवतः विषये मया इतः पूर्वम् एव श्रुतम्। तथापि ऋणदाने कश्चन नियमः भवता पालनीयः। यतः अन्यग्रामीणाय ऋणदानसमये मया एषः नियमः पाल्यते। न्यासत्वेन भवान् किमपि वस्तु संस्थाप्य ऋणं स्वीकर्तुम् अर्हति" इति उक्तवान् वीरदासः।

"एवं वा? अस्तु नाम। अत्र मम अपि कश्चन नियमः अस्ति। ऋणप्रत्यर्पण-समनन्तरम् एव भवता न्यासत्वेन स्थापितं वस्तु प्रतिदातव्यम्" इति वदन् नागभूषणः हस्ते स्थितं सुवर्णकङ्कणं वीरदासाय दत्तवान्।

पुनः उक्तवान् - "एतद्वस्तु विक्रीय प्राप्तेन धनेन ऋणव्यवहारः न समापनीयः। रोकधनरूपेण एव भवता मत्सकाशतः ऋणं प्रतिस्वीकरणीयम्" इति।

वीरदासः एतं नियमम् अपि अङ्गीकृत्य नागभूषणाय द्विशतं रूप्यकाणि ऋणत्वेन दत्तवान्।

नागभूषणस्य तु कुतूहलम् -'वीरदासः मत्सकाशतः कथं वा ऋणं प्रति-सङ्गृह्णीयात्? कम् उपायम् आश्रयेत्?' इति।

षण्मासानाम् अवधिः अतीतः। वीरदासः तु ऋणस्य प्रस्तावम् अपि न कृतवान्।

'स्पर्धायां मम एव जयः' इति चिन्तयन् नागभूषणः वीरदासस्य समीपं गतवान्।

वीरदासः पृष्टवान् - "स्पर्धायाः पारितोषिकं धनम् आनीतवान् वा?" इति।

आश्चर्यं प्रकटयन् नागभूषणः उक्तवान् - "मया किं दातव्यम्? वस्तुतः भवता किल ऋणं प्रतिस्वीकरणीयम् आसीत्? तत् भवान् स्वीकर्तुं न शक्तवान्। अतः जयः मम एवं" इति।

वीरदासः हसन् उक्तवान् - "ऋणं मया तु पूर्वम् एव प्रतिसङ्गृहीतम्। अतः एव पारितोषिकं पृष्टवान्" इति।



"असत्यं वदति भवान्। धनंप्रतिस्वीकृतम् इत्यत्र कः आधारः? माम् असत्यकथनेन वञ्चयन् अस्ति भवान्" इति कोपेन उक्तवान् नागभूषणः।

"अहं किमर्थं वा असत्यं वदेयम्?" इति पृच्छन् वीरदासः एकं सेवकम् आहूतवान्। आगतं सेवकं प्रदर्शयन् पृष्टवान् च - "एतं भवान् जानाति वा?" इति।

एतं सेवकं दृष्ट्वा नागभूषणः पूर्वं प्रवृत्तं सर्वं स्मृतवान्।

मासचतुष्टयतः पूर्वं कस्याञ्चित् वृष्टिमयरात्रौ कश्चन ग्रामीणः वृष्ट्या आर्द्रः सन् आगत्य दीनतया प्रार्थितवान्- "भोः श्रीमन्! भवता एव रक्षणीयः अहम्। मम पत्नी मरणावस्थायाम् अस्ति इव। एतत्क्षणे एव चिकित्सार्थं सा नगरं नेतव्या। तदर्थं द्विशतं रूप्यकाणि अत्यावश्यकानि। कृपया माम् अनुग्रहृणातु" इति।

नागभूषणः तदानीम् एव भोजनं समाप्य बहिः आगतवान् आसीत्। सः अनादरं प्रकटयन् उक्तवान् - "भोः! भवान् कः, कुत्रत्यः, इत्यादिकं किमपि न जानामि। कुलगोत्रादिकम् अज्ञात्वा ऋणं कथं ददामि? न्यासरूपेण किमपि स्थापितं चेत् ऋणं दातुं शक्येत" इति।

'तदर्थम् अपि आनीतवान् अस्मि' इति वदन् सः सेवकः वस्त्रतः सुवर्णमयं कङ्कणं बहिः आनीतवान्। उक्तवान् च - "एतत् कङ्कणं मम पत्न्याः। एतत् न्यासत्वेन स्वीकृत्य धनं ददातु" इति।



सुवर्णकङ्कणं दृष्ट्वा नागभूषणस्य मनः सन्तुष्टम्। सः व्यवहारपत्रं लिखित्वा तस्य ग्रामीणस्य अङ्गुष्ठाङ्कनं कारयित्वा सुवर्ण-कङ्कणं स्वीकृत्य द्विशतं रूप्यकाणि दत्तवान्।

एवं वीरदासः नागभूषणतः ऋणं प्रति-स्वीकृतवान् आसीत्।

एतत् सर्वं स्मृत्वा तीव्रकोपेन नागभूषणः उक्तवान् - "भोः! सर्वथा वञ्चना एषा। पूर्वतननियमानुगुणं ऋण-प्रतिस्वीकरण-समनन्तरम् एव किल भवता मम वस्तु प्रत्यर्पणीयम् आसीत्?" इति।

"अत्र का वञ्चना? मम सेवकः न्यास-रूपेण यत् सुवर्णं दत्तवान् तत् भवदीयम् एव। भवदीयं कङ्कणं द्रवीकारयित्वा रूपान्तरेण तत् निर्मितम् आसीत्। आवश्यकं चेत् तस्य भारं पश्यतु। भवता वृद्धिः अपि दातव्या नास्ति। एषः व्यवहारः समाप्तः इति अहं चिन्तयामि" इति उक्तवान् वीरदासः।

नागभूषणः वीरदासाय सहस्रं रूप्यकाणि दातुं न इच्छति। किञ्चित् आलोच्य सः उक्तवान् - "अहं भवते पारितोषिकत्वेन दातव्यानि सहस्रं रूप्यकाणि न ददामि। चातुर्येण भवान् सङ्ग्रहीतुं शक्नोति चेत् सङ्गृहणातु नाम" इति।

तदा वीरदासः हसन् उक्तवान् - "भवान् एवं कुर्यात् इति सन्देहः मम पूर्वम् एव आसीत्। अतः द्विहस्ररूप्यकात्मकं भवतः कङ्कणं मम समीपे एव स्थापितवान्। सेवकेन यत् कङ्कणं दत्तं तत् न सुवर्णस्य। ताम्रेण निर्मितं तत्। सुवर्णद्रवेण लिप्तं च। अतः तत् ताम्रकङ्कणं सहस्रं रूप्यकाणि च दत्त्वा भवदीयं कङ्कणं नेतुम् अर्हति भवान्" इति। अनन्तरं सेवकद्वारा नागभूषणस्य कङ्कणम् आनाय्य प्रदर्शितवान् च।

एतत् श्रुत्वा नागभूषणः निरुत्तरः अभवत्। सः मौनं गृहं गत्वा ताम्रकङ्कणं सहस्रं रूप्यकाणि च आनीय दत्त्वा स्वकीयं सुवर्णकङ्कणं प्रतिस्वीकृतवान्।

ततः प्रस्थानसमये तस्य मनसि कश्चन विचारः आगतः। सः वीरदासं उक्तवान् - "भोः! पूर्वतन नियमानुसारं ऋणप्रति-

स्वीकरणतः पूर्वं मदीयं वस्तु प्रत्यर्पणीयम् आसीत् भवता। किन्तु भवान् ताम्रकङ्कणं दत्त्वा मां वञ्चितवान्। एतेन वचनभ्रष्टः अभवत् च" इति।

तदा हसन् एव वीरदासः उक्तवान् - "अहं वचनभ्रष्टः सर्वथा न जातः। भोः मित्र! भवान् महाचतुरः इति अहं पूर्वम् एव जानामि। 'एतादृशस्य भवतः सकाशात् ऋणं प्रतिस्वीकरणीयं चेत् विशेषोपायः आश्रयणीयः एव' इति अहं चिन्तितवान्। अतः एव भवन्तं किञ्चिदिव सम्भ्रन्तं कृतवान्। सत्यं तु एतत् यत् मम सेवकेन दत्तं कङ्कणं सुवर्णमयम् एव, न तु ताम्रमयम्। भवतः कङ्कणस्य समानं मूल्यम् अर्हति तत्। अतः ऋणप्रतिस्वीकरणतः पूर्वं मया भवत्कङ्कणमूल्यकं कङ्कणं दत्तम् आसीत् एव। अतः भवदीयं सुवर्णं पूर्वम् एव दत्तम् आसीत्। तच्च न साक्षात्, अपि तु रूपान्तरेण। इदानीं समाहितः वा भवान्?" इति।

"इतःपरम् अपि कथं वा प्रतिवदामि? तावान् मूर्खः विवेकरहितः न अहम्। ऋणप्रतिस्वीकरणविषये भवतः सकाशतः बहु ज्ञातव्यम् अस्ति मया" इति उक्त्वा नागभूषणः गन्तुम् उद्युक्तः।

तस्य गमनं किञ्चित्कालं स्थगयन् वीरदासः उक्तवान् - "दत्तस्य ऋणस्य प्रतिस्वीकारे काऽपि पद्धतिः मार्गः वा नास्ति एव। ऋणस्वीकर्तुः आवश्यकतायाः दुरुपयोगं स्वीकृत्य अधिकवृद्धिं स्वीकर्तुं प्रयत्नः कृतः चेत् समस्याः उद्भवन्ति। साहाय्यबुद्ध्या ऋणं दत्तं चेत् स्वीकर्तुः मनसि कृतज्ञताभावः सदा तिष्ठति। अतः सः स्वयं समये ऋणंप्रत्यर्पयिष्यति। ऋण-प्रतिस्वीकरणार्थं तदा श्रमः करणीयः एव न भवति" इति।

"महोदय! भवान् एतत्सर्वं स्वानुभवेन वदन् अस्ति। तथैव आचरन् अस्ति अपि। अतः अहम् एतत् न निराकरोमि। यावच्छक्यम् एतं मार्गम् अनुसर्तुं प्रयत्नं करोमि। भवता अहं बहुधा उपकृतः" इति उक्त्वा नमस्कृत्य स्वगृहं गतवान् नागभूषणः।



# अहङ्कारी

वृद्धः कश्चित् राजा व्याख्यानग्रन्थानां साहाय्येन भगवद्गीतां पठितवान्। अनन्तरं प्रान्तीयभाषया पद्यरूपेण तस्याः सारं लिखितवान् च।

एतेन तस्य मनसि 'अहं कश्चन श्रेष्ठः कविः' इति भावः आगतः। आत्मनः कविताप्रौढतां प्रदर्शयितुम् इच्छन् राजा 'मत्समानं कञ्चित् कविश्रेष्ठं मम समीपं प्रेषयतु' इति ख्यातं कविं विष्णुशर्माणं प्रति पत्रं लिखितवान्। विष्णुशर्मा कञ्चित् युवकं कविं महाराजसमीपं प्रेषितवान्।

राजा तं दृष्ट्वा - "भवान् तु अल्पवयस्कः। महाकविः कथं वा भवितुम् अर्हति? भगवद्गीताम् अहम् एव व्याख्यानग्रन्थस्य साहाय्येन पठितवान्। तस्याः सारः पद्यरूपेण मया लिखितः च। एतस्य गुणावगुणं भवान् कथं ज्ञातुं शक्नुयात्? भवान् भवतः गुरुम् एव अत्र प्रेषयतु" इति उक्तवान्।

केषाञ्चित् दिनानाम् अनन्तरं विष्णुशर्मा स्वयं राजास्थानम् आगतवान्। राजा "सः तरुणः कविः कः?" इति पृष्टवान्।

"महाराज! भगवद्गीतायाः तात्पर्यं ज्ञातुं भवता यस्य व्याख्यानग्रन्थस्य उपयोगः स्वीकृतः तं ग्रन्थं स एव लिखितवान्" इति उक्तवान् विष्णुशर्मा।

राजा आश्चर्येण "तावत्पण्डितः वा सः? मम पुरतः तद्विषये किमपि न उक्तवान् एव किल!" इति उक्तवान्।

तदा विष्णुशर्मा उक्तवान् - "नैजः कविः कदापि आत्मश्लाघनं न करोति। विनयः तस्य लक्षणम्" इति।

एतेन वचनेन महाराजस्य अहङ्कारः समूलं नष्टः।



पक्षिणः पशवः च –

# विचित्राः जलचराः

समुद्रतले स्थिताः प्रवालशिलाः विविधमीनानां वासस्थानानि। एतासां प्रवालशिलानाम् आधारेण विचित्राः विषप्राणिनः अपि जीवन्ति। एतेषु अन्यतमाः 'सी अनिमोनी' नामकाः जलचराः। एते विविधवर्णयुताः साक्षात् पुष्पाणि इव भान्ति। किन्तु बहु अपायकारिणः। एतेषां शिरसि पुष्पपरागाः इव ये चलन्ति ते वस्तुतः विषपूर्णानि श्मश्रुरोमाणि। मीनाः अन्यजलचराः च श्मश्रोः वर्णेन आकृष्टाः सन्तः समीपम् आगच्छन्ति। प्रथमस्पर्षेण एव मृताः भवन्ति। मृतम् एतं प्राणिनं अनिमोनी सुखेन गिलति। तदीयानि श्मश्रुरोमाणि सूच्याकारेण भवन्ति। विष स्रावयन्ति च। किन्तु एतत् विषं सर्वेषु परिणामं न जनयति। केषाञ्चित् प्राणिनाम् उपरि एव एतस्य परिणामः।

प्रवालशिलासु निवसतः एतस्य अनिमोनी प्राणिनः दैर्घ्यं सामान्यतः २० सें.मी.। आष्ट्रेलियादेशीयाः तु एकमीटरदीर्घाः अपि भवन्ति। एकैकः अपि अनिमोनी सामान्यतः ३० वर्षाणि यावत् प्रवालशिलासु जीवति। प्रयोगशालासु केचन अशीतिवर्षाणि अपि जीवितवन्तः। केचन प्राणिशास्त्रज्ञाः वदन्ति यत् एते प्राणिनः ३०० वर्षपर्यन्तम् अपि जीवन्ति इति। एतदनुगुणं प्रपञ्चे दीर्घजीवी जलचरः एषः एव।

एतेषां सन्तानाभिवृद्धिः द्विधा भवति। केचन तु अण्डानि प्रसूय सन्तानं वर्धयन्ति। अन्ये केचन वृक्षाणां पल्लवः इव शरीरम् उद्भिभ्य पृथक् भवन्ति।

जलान्तर्गतप्रवालशिलानां मध्ये निवसतां मीनानां कर्कटानां च शुक्तीषु निवसन्तः एते आत्मानं रक्षन्ति।

प्रवालशिलासु अन्योऽपि जन्तुः विशेषतः निवसति। तस्य नाम स्टारफिश् इति। एतस्य आकारः नक्षत्रस्य इव भवति। बहु प्रकाराः भवन्ति एते। एते शुक्तिसहितान् मीनान् गृहीत्वा शुक्तीः बलेन निष्कास्य मीनान् खादन्ति।



# कठिनशब्दानां सान्दर्भिका:
# अर्था:

अग्रजा - Elder sister
अङ्गुष्ठाङ्कनम् - Thumb impression
आवुत्तः - Brother-in-law
उडुपः - Catamaran
उलूकः - Owl
ऊधः - Udder
कटः - Mat
कण्डोलः - Basket
कर्कटकः - Crab
गोणी - Gunny
गोष्ठम् - Cattle-shed
चञ्चलचित्तः - Vacillating
दोग्धि - Milks
द्वारशृङ्खला - Padlock
पङ्कः - Slush
परागः - Pollen
पर्यायः - Rotation
पर्यायव्यवस्था - Alternative
पर्युषितम् - Stale
प्रत्युत - Instead
प्रवालः - Coral
प्रशिक्षणम् - Training
प्रोञ्छः - Towel
फलसमृद्धिः - Yield
मदिरा - Liquor
रोकधनम् - Cash
वल्मीकः - Anthill
वातायनम् - Window
शतमुखः - From all sides
शुक्तिः - Shell
श्मश्रु - Moustache
सम्मार्जनम् - Sweeping
सालवृक्षः - Sal tree
सुलभलभ्या - Cheap

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां अगस्ट्-८६ मासे प्रकटयिंष्यामः।





* उपरितनं चित्रद्वयं पश्यन्तु। युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जून्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः-

**चन्दमामा (संस्कृतम्)**
७३/२, 'अक्षरम्' रङ्गरावुमार्ग, शङ्करपुरम् बेङ्गलूरु-५६०००४

---

## 'एप्रिल्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः-

प्रथमचित्रम् – **कार्ये प्रवृत्तिः?**

द्वितीयचित्रम् – **कार्यात् निवृत्तिः।**

प्रेषकः- श्री प्रदीपकुमार मिश्र, १३३, B.H.S. अल्लापुरम्, प्रयाग-६.

# भवन्तः जानन्ति वा? (उत्तराणि)

१. मास्कोनगरे। २.पिरमिड्स्। ३. लियोनार्डो डा विञ्ची महोदयेन निर्मितः 'मोनालीसा' चित्रपटः। ४. जपान्। ५. अमेरिकादेशे।

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कदा उत्तिष्ठति भवान्?

| | |
|---|---|
| रामः - अद्य कदा उत्थितवान् भवान्? | When did you wake up today? |
| श्यामः - प्रतिदिनम् इव पञ्चवादने एव। | At 5 O'clock as usual |
| रा - प्रतिदिनं पञ्चवादने! तावच्छीघ्रम् उत्थाय किं वा करोति? | At 5 O'clock every day! Getting up so early what do you do? |
| श्या - प्रातर्विधिं समाप्य दशनिमेषं धावामि। | I go for a 10 minute running exercise after finishing the morning ablutions. |
| रा - ततस्ततः? | Then? |
| श्या - षड्वादने योगासनकक्ष्यां गच्छामि। प्रत्यागनसमये सामान्यतः सार्ध-सप्तवादनं भविष्यति। तदनन्तरं स्नानं समाप्य उपाहारं स्वीकृत्य नववादने विद्यालयं गमिष्यामि। | At 6 I go to the yoga class. It will be 7.30 by the time I get back. Then I have my bath, take break-fast and go to school at 9 O'clock. |
| रा - अहं तु परिक्षासमये अपि पञ्चवादने न उत्थितवान्। | I am never used to getting up at 5 O'clock, even at the time of examinations! |
| श्या - एवं तर्हि प्रतिदिनम् उत्थानं कदा? | When do you wake up really? |
| रा - सप्तवादनानन्तरं यदा कदापि। | Only after 7. |
| श्या - तर्हि रात्रौ शयनं कदा? | When do you go to bed? |
| रा - निश्चितसमयः कोऽपि नास्ति। एकादश वादनानन्तरं कदाचित्। | I don't have a fixed time. Any time after 11 O'clock. |
| श्या - एवं तर्हि रात्रिभोजनम्? | So when do you have your supper? |
| रा - सार्धनववादनानन्तरम्। यतः माता-पितरौ नववादने एव क्लबूतः प्रत्यागच्छतः। | After 9.30. My parents will be back only by that time. |
| श्या - माम् अन्यथा न चिन्तयत्। यदि उत्थानं शयनं च व्यवस्थितं भवति तर्हि जीवनम् एव व्यवस्थितं भवि-ष्यति। अतः ....। | See, don't mistake me. If you are punctual in going to bed and getting up, your life will be systematic. So.... |
| रा - अहम् अति तथैव चिन्तयामि। किन्तु तथा आचरितुं न शक्नोमि। | Yes. I too feel so, but I can't practice it. |

CHANDAMAMA (Sanskrit) JUNE 1986 Regd. No. TN/MS(S)/302

# प्राचीन-भारतस्य भव्यता तथा तेजस्विता




**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् एतां १,२०,००,००० बालकाः पठन्ति ।

**चन्दमामायाः** प्रसारसङ्ख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्व-एशियादेशानां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

# चन्दमामायां

प्रत्येकमासस्य कथासु दर्शितम् अस्ति ।

भारतस्य सर्वाधिकप्रसारयुता बालानां मासिकी ।